अत्र प्रथमानिर्दिष्टानां सुजनेत्यादिकर्तॄणां द्वितीयानिर्दिष्टानां च परोपकारेत्यादिकर्मणामेकस्मिन् मोचनक्रियारूपधर्मेऽन्वयेऽपि न कर्तृकर्मणां परस्परं सादृश्यं भासते । किंतु कर्तॄणामेव परस्परं सादृश्यं पृथक् भासते । तथा कर्मणामेव परस्परं सादृश्यं पृथक् भासत इति कर्तॄणां दीपकमेकं कर्मणां चैकमिति द्वे दीपके । चन्द्रेणेत्युदाहरणे भवतेतिशब्दोपादानान्नृपस्य प्रकृतत्वं स्फुटमेव । मृतस्येत्युदाहरणे सुजनेत्युदाहरणे च कस्यचित् प्रकृतत्वे दीपकम् । अन्यथा तुल्ययोगिता । कारकतुल्ययोगितेव कारकदीपकं स्वयमूहनीयम् । तुल्ययोगितायामिव दीपकेऽपि यथाकथंचिदनेकत्र एकान्वयश्चमत्कार्यपेक्षित इति वक्तुं शक्यम् । तेन निखिलभेदसंग्रहः । तत्र कस्यचित् प्रकृतत्वे दीपकम् । प्रकृतमात्रत्वे अप्रकृतमात्रत्वे वा तुल्ययोगितेति भेदः । एके पुनर्दीपकं तुल्ययोगिताया नातिरिच्यते । किंतु तस्या एव प्रकारान्तरम् । तेन तस्यास्त्रैविध्यं वक्तव्यमिति । अथ पूर्वपूर्वेण उत्तरोत्तरमुपक्रियते चेन्मालादीपकम् । यथा—

आस्वादेन रसो रसेन कविता काव्येन वाणी तया
लोकान्तःकरणानुरागरसिकः सभ्यः सभा चाप्मुना ।
दारिद्र्यानलदह्यमानजगतीपीयूषधाराधर
क्षोणीनाथ तया भवांश्च भवता भूमण्डलं भासते ॥

अत्र आस्वादेन रसो भासत इति रसं प्रत्यास्वाद उपकारकः, रसेन कविता भासत इति कवितां प्रति रस उपकारक इति रीत्या मालारूपेण स्थितानामास्वादादिपदार्थानां मध्ये पूर्वपूर्वेण आस्वादादिना उत्तरोत्तरस्य रसादेरुपकृतत्वात् भासनक्रियारूपधर्मस्य दीपस्येव सर्वत्रोपकारकत्वाच्च मालादीपकमिति प्राचीनाः । एके तु मालारूपेणावस्थितानां पदार्थानां सादृश्यस्याऽसंपर्कान्नेदं दीपकभेदः । किंतु 'पूर्वं पूर्वं विशेषणं परं परं विशेष्यम्' इति वक्ष्यमाण एकावलीभेद इति ॥ १७ ॥

---

वस्तुप्रतिवस्तुभावापन्नसाधारणधर्मकवाक्यार्थयोरार्थमौपम्यं प्रतिवस्तूपमा ॥

वस्तुतः एकरूपयोरपि धर्मयोः पृथक्छब्दाभ्यामुपादानं वस्तुप्रतिवस्तुभावः । वाक्यार्थयोरिति द्विवचनमनेकत्वोपलक्षकम् । तेन मालाप्रतिवस्तूपमाया अपि संग्रहः । उदाहरणम्—

दूरे वसन्नपि भवान् गुणगौरवेण
लोकोत्तरेण परिपूरित एष्य एव ।
आकाशवासरसिकोऽप्युडुचक्रवर्ती
ज्योत्स्नावगुम्फिततनुः स्पृहणीय एव ॥

अत्र एष्यस्पृहणीयशब्दार्थयोर्वस्तुत ऐक्येऽपि भिन्नशब्दोपात्तत्वात् वस्तुप्रतिवस्तुभावः । तदापन्नसाधारणधर्मकयोः पूर्वोत्तरवाक्यार्थयोश्चाऽर्थतः सादृश्यं भासते । यथा वा मदीयदत्तकारुण्यलहर्याम्—

शोभेत चेत्तव दया हृदि वर्तमाना
गाढं शयीत मम मूर्ध्नि तदेव दत्त ।
शैलोदरे जनिमदप्यथ रत्नमग्र्यां
मत्युत्तमेव रुचिमाश्रयते हि हेम्नि ॥

अत्र रुचिशोभयोर्वस्तुप्रतिवस्तुभावः । अत्र च प्रकृतवाक्यार्थस्य उपमेयत्वमप्रकृतवाक्यार्थस्य च उपमानत्वं पर्यवसितम् । मालाप्रतिवस्तूपमा यथा—

वहति विषधरान् पटीरजन्मा शिरसि मषीपटलं दधाति दीपः ।
विधुरपि भजतेतरां कलङ्कं पिशुनजनं खलु बिभ्रति क्षितीन्द्राः ॥

अत्र धारणरूप एक एव साधारणो धर्मो वहति-दधाति-भजते-बिभ्रतीति चतुर्भिः पदैः पृथगुपात्त इति वस्तुप्रतिवस्तुभावापन्नः । अत्र च अन्तिमचरणगतवाक्यार्थस्य उपमेयत्वमन्येषां च त्रयाणामुपमानत्वं पर्यवसितम् । अस्याः पुनर्मालारूपता स्फुटैव । इयं च प्रतिवस्तूपमा वैधर्म्येणापि संभवति । यथा—

वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः ।
न हि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥

अत्र द्वितीयार्धगतदृष्टान्तबलात् पूर्वार्धवाक्यार्थेन 'सङ्गविशेषं विना पुरुषो न पूज्यते' इति स्वविपरीतोऽर्थ आक्षिप्यते। आक्षिप्तस्य च यथाकथंचित् वाक्यवेद्यतया प्रकृते वाक्यार्थत्वमेवेष्टमिति आक्षिप्तपूर्वार्धवाक्यार्थस्य द्वितीयार्धवाक्यार्थेन सह सादृश्यं स्फुटमेव गम्यते । अत्र च पूजनाभावमहिमाभावयोर्वस्तुप्रतिवस्तुभावः । केचित्तु द्वितीयार्धवाक्यार्थेन 'तुम्बीफलसहितो वीणादण्डो महिमानं प्रयाति' त्यर्थमाक्षिपन्ति । अस्मिन् पक्षे तु पूजनमहिम्नोर्वस्तुप्रतिवस्तुभावः । अथ वैधर्म्येण प्रतिवस्तूपमेति यदुच्यते तत्तु आमुखं वैधर्म्यस्य प्रतीयमानत्वात् संगच्छते । इयं च वाक्यार्थयोः सामान्यविशेषभावानापन्नयोर्भवति ॥ १८ ॥

---

बिम्बप्रतिबिम्बभावापन्नसाधारणधर्मादिकं वाक्यार्थयोरार्थमौपम्यं दृष्टान्तः ॥

आदिशब्देन उपमानोपमेये । उदाहरणम्—

अन्येषु सत्स्वपि नृपेषु मनीषिचेत
आह्लादयत्यतितमामयमेव भूपः ।
सर्वग्रहेषु परितः स्थितिमत्सु तावत्
संवर्धयत्युडुपतिर्जलधेः प्रवाहम् ॥

अत्र पूर्वोत्तरवाक्यार्थयोरार्थे औपम्ये पूर्ववाक्यप्रविष्टानामन्यनृपमनीषिचेतआह्लादनवर्ण्यनृपाणाम् उत्तरवाक्यप्रविष्टानामन्यग्रहजलधिप्रवाहसंवर्धनोडुपतीनां च यथाक्रमं बिम्बप्रतिबिम्बभावापन्नत्वात् लक्षणसमन्वयः । बिम्बप्रतिबिम्बभावश्च उपमानकोटिप्रविष्टानाम् उपमेयकोटिप्रविष्टानां च धर्माणां परस्परसादृश्याद्भेदः । प्रतिवस्तूपमायां हि साधारणधर्मो वस्तुप्रतिवस्तुभावापन्नः । अत्र तु बिम्बप्रतिबिम्बभावापन्न इति भेदः । अयं च वैधर्म्येणापि दृश्यते । यथा—

कृतं च गर्वाभिमुखं मनस्त्वया किमन्यदेवं निहताश्च नो द्विपः ।
तमांसि तिष्ठन्ति हि तावदंशुमान्न यावदायात्युदयाद्रिमौलिताम् ॥
अत्र मनोगर्वाभिमुखीकरणवैरिहननयोरंशुमदुदयाचलमस्तकाऽनागमनतमःस्थित्योश्च यथाक्रमं वैधर्म्येण बिम्बप्रतिबिम्बभावः। वैधर्म्यमतिवस्तूपमाया इव वैधर्म्यदृष्टान्तस्यापि विवेकसरणिः ॥ १९ ॥

## उपात्तयोरर्थयोरार्थोऽभेद औपम्यपर्यवसायी निदर्शना॥

औपम्यपर्यवसायित्वं च सादृश्यमूलकत्वम् । इयं च वाक्यार्थनिदर्शना पदार्थनिदर्शना चेति द्वेधा । उदाहरणम्—

कवित्वरसिकाग्रगे त्वयि धरापतौ जाग्रति
विरच्य कवितासुधामितरभूभृतं दर्शयन् ।
स्थितं तरुणशेखरं परिविहाय साकं स्तनं-
धयेन युवतीं सुतां खलु विवाहयत्यात्मनः ॥

अत्र वर्ण्येतरनृपं प्रति सरसकवितामदर्शनं स्तनंधयेन सह तरुणसुताया विवाहनं चाऽभिन्नमिति तत्सादृश्यमूला बुद्धिः । इयमेकवाक्यगता वाक्यार्थनिदर्शनोदाहृता । यदि तु प्रकृतोदाहरणे 'यो दर्शयति स विवाहयति' इति रचना क्रियते तदा भिन्नवाक्यगता सा बोध्या । यथा वा मदीयदत्तकारुण्यलहर्याम्—

येऽभ्यर्थितं भवति दातरि जाग्रतीशा-
ऽन्यं संसरन्ति खलु ते पदवीं भजन्ते ।
हित्वा सुधाजलनिधिं लवणाम्बुकूपं
संयाचतः सतृप इत्यथ नो वदेत् कः ॥

अत्र त्वां विहायाऽन्यानुसरणं सुधासमुद्रं विहाय क्षारोदकूपयाचनं चाऽभिन्नमिति द्वयोर्वाक्यार्थयोरभेदबुद्धिः सादृश्यमूला । पदार्थनिदर्शना यथा—

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥

अत्र लीलात्वेन रूपेण उपमानोपमेयगतधर्मभूतयोर्लीलाशब्दार्थयोर्द्वयोरपि लीलाशब्देनोपात्तत्वादुपात्तयोरित्यादिप्रकृतलक्षणप्रवृत्तिः । बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टार्थयोः प्रकृतैकधर्मिगतयोरार्थाभेदे वाक्यार्थनिदर्शना । उपमानोपमेयगतधर्मयोरार्थाभेदप्रतिपत्तौ पदार्थनिदर्शना । उपमानोपमेययोरन्यतरधर्मस्याऽन्यतरत्रारोपः पदार्थनिदर्शनेत्येके । मालारूपाऽपि निदर्शना दृश्यते । यथा—

हालाहलं खलु पिपासति कौतुकेन
कालानलं परिचुचुम्बिषति प्रकामम् ।
व्यालाधिपं च यतते परिरब्धुमद्धा
यो दुर्जनं वशयितुं कुरुते मनीषाम् ॥

अत्र हालाहलपानं कालानलचुम्बनं व्यालाधिपपरिरम्भणं दुर्जनवशीकरणं चाऽभिन्नमिति सादृश्यमूला बुद्धिः । चतुर्थवाक्यार्थ उपमेयमन्ये च त्रय उपमानानीति मालारूपताऽस्याः स्फुटैव । लक्षणे अर्थयोरिति द्विवचनमनेकत्वोपलक्षकम् । तेनाऽस्यां मालारूपायां नाऽव्याप्तिः । अथाऽन्ये तु—स्वक्रियया परान् प्रति सतोऽसतो वाऽर्थस्य बोधनं यन्निबध्यते स निदर्शनायास्तृतीयः प्रकारः । यथा—

चूडामणिपदे धत्ते योऽम्बरे रविमागतम् ।
सतां कार्यातिथेयीति बोधयन् गृहमेधिनः ॥

अत्र समागतं रविं शिरसा संभावयन्नुदयाचलः स्वनिष्ठया रविधारणक्रियया मयेवाऽन्येनापि सत्सेवा कार्येति सदर्थं बोधयन् निबद्ध इति सदर्थनिदर्शनेत्याहुः । परे तु बोधयन्निव बोधयन्निति गम्योत्प्रेक्षयैवाऽस्य गतार्थता । उत्प्रेक्षावाचकस्येवादेरप्रयोगे गम्योत्प्रेक्षेति तु उक्तपूर्वम् । एवम्—

उन्नतं पदमवाप्य यो लघुर्लीलयैव स पतेदिति ब्रुवन् (ध्रुवम्)।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः ॥

इत्यसदर्थनिदर्शनोदाहरणस्यापि। ध्रुवमिति पाठे तु बोधयन्बोधयितुं वेत्यस्याऽध्याहारः। एवं च तृतीयप्रकारो नाभ्युपेय इत्याहुः॥ २०॥

---

## उपमानादुपमेयस्य गुणविशेषवत्त्वेनोत्कर्षो व्यतिरेकः॥

गुणविशेषश्च न साधारणः किंतु विधर्मभूतः। उदाहरणम्—

मनुजदेव कथं नु भवान् सुराङ्घ्रिपसमः स च संनिधिमागते।
अभिमतां श्रियमर्पयति ध्रुवं त्वमथ दूरतरस्थितिमत्यपि॥

अत्र दूरस्थाय निकटस्थाय च अभिमतश्रीसमर्पणेन गुणेन उपमेयस्य प्रकृतनृपस्य उपमानात्कल्पवृक्षादुत्कर्षः। नास्ति चायं गुणः कल्पवृक्षे। स हि निकटस्थायैव श्रियमर्पयतीति विधर्मत्वं गुणस्य। अयं च व्यतिरेक उपमेयोत्कर्षकोपमानापकर्षकयोर्वैधर्म्ययोर्द्वयोरपि उपादानाऽनुपादानाभ्यामेकतराऽनुपादानेन च तावच्चतुर्धा। सोऽप्युपमायाः श्रौतीत्वाऽऽर्थीत्वाऽऽक्षिप्तत्वैर्द्वादशविधो भवन् सश्लेषनिःश्लेषत्वाभ्यां चतुर्विंशतिप्रकार इति प्राञ्चः। उपमाभेदाः सर्वे एवाऽत्र संभवन्तीति नेयं चतुर्विंशतिभेदगणना युज्यत इति नव्याः। अथ उपमानादुपमेयस्य गुणविशेषन्यूनत्वेनाऽपकर्षोऽपि व्यतिरेकः। यथा—

जगत्त्रयत्राणधृतव्रतस्य क्षमातलं केवलमेव रक्षन्।
कथं समारोहसि हन्त राजन् सहस्रनेत्रस्य तुलां द्विनेत्रः॥

अत्र उपमानाच्छक्रादुपमेयस्य राज्ञः सहस्रनेत्रत्वजगत्त्रयत्राणधृतव्रतत्वरूपेण गुणद्वयेनैव न्यूनत्वादपकर्षः। तथा च धर्मद्वयेनैव न्यूनोऽसि धर्मान्तरेण तु सम इति प्रतीतिकृतचमत्कारविशेषादस्याऽलंकारतेत्याहुः। तन्मते 'उपमानादुपमेयस्य गुणविशेषवत्त्वेनोत्कर्षो गुणविशेषन्यूनत्वेनाऽपकर्षो वा व्यतिरेकः' इति लक्षणं बोध्यम्। अस्मिन्नलंकारे च गुणान्तरप्रयुक्तं सादृश्यमावश्यकमेव।

अथ

दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य ।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥

इत्यत्र तु उपमेयस्य कृपणस्य उत्कर्षाऽपकर्षयोरन्यतरस्याऽप्रतीतेर्न व्यतिरेकः । किंतु कृपणकृपाणयोर्द्वयोः केवलसादृश्यस्य प्रतीतेर्गम्योपमैव ॥ २१ ॥

---

## गुणप्रधानभावापन्नयोरर्थयोः सहार्थसंबन्धः सुन्दरः सहोक्तिः ॥

गुणत्वं चाऽत्राऽप्रधानत्वम् । तच्च 'सहयुक्तेऽप्रधाने' इति शास्त्रसिद्धम् । सहार्थश्च साहित्यम् । सुन्दरत्वं चाऽत्राऽतिशयोक्त्याऽनुप्राणने भवतीति वदन्ति । उदाहरणम्—

श्रीमन् भूमीश्वर ननु सुधोदन्वतो निर्मलानां
कल्लोलानां प्रियसहचरस्त्वत्कटाक्षः सदैव ।
लक्ष्म्या शश्वन्निखिलमनुजैः काम्यया प्रस्फुरन्त्या
वर्गे वर्गे निपततितरां पण्डिताग्रेसराणाम् ॥

अत्र लक्ष्मीकटाक्षरूपयोर्गुणप्रधानयोः सहभावः । स च कटाक्षपातस्य कारणस्य तत्कार्यस्य च लक्ष्मीप्राप्तेः सहभावात्मिकयाऽतिशयोक्त्याऽनुप्राणनात् सुन्दरः । अत्र च गुणप्रधानयोर्लक्ष्मीकटाक्षयोः साधारणधर्मो निपतनक्रिया । यथा वा—

सह कुमुदकदम्बैः काममुल्लासयन्तः
सह घनतिमिरौघैर्धैर्यमुत्सारयन्तः ।
सह सरसिजषण्डैः स्वान्तमामीलयन्तः
प्रतिदिशममृतांशोरंशवः संचरन्ति ॥

अत्र गुणस्य कुमुदकदम्बादेः प्रधानस्य च कामादेः सहभावः । तयोश्च साधारणो धर्म उल्लासादिः । यद्यपि कुमुदकदम्बादिनिष्ठमुल्लासादिकं पत्रोन्मीलनादिरूपं भिन्नम् । कामादिनिष्ठं च प्रादुर्भाग-

दिरूपं भिन्नम्। तथाप्याश्रयभेदेन भिन्नयोस्तयोरुल्लासादिपदार्थभूतेन विकासत्वाद्येकरूपेणाऽऽक्रान्ततया अभेदाध्यवसायात् साधारण्यम्। "सहाऽधरदलेनाऽस्या यौवने रागभाक् प्रियः।" इत्यत्र तु आसक्तिलौहित्ययोः सर्वथा परस्परं भिन्नयोः रागशब्दगतश्लेषमूलकादभेदाऽध्यवसायात्साधारणधर्मता। सहभावश्चात्र प्रियाऽधरयोः। अस्यां हि साधारणधर्मे प्रधानस्य शाब्दोऽन्वयः। गुणस्य च आर्थोऽन्वयः। 'पुत्रेण सहाऽऽगतः पिता' इत्यादौ सहभावस्याऽसुन्दरत्वान्न सहोक्त्यलंकारः। लक्षणे अर्थग्रहणात् पर्यायाद्युपस्थितस्य साहित्यस्य संग्रहः॥ २२॥

## विनाऽर्थसंबन्धः सुन्दरो विनोक्तिः॥

सुन्दरत्वं च विनाकृतस्य वस्तुनो रमणीयत्वाऽरमणीयत्वाभ्यां भवति। उदाहरणम्—

प्रभुतया क्षितिपेन्दिरया धिया प्रतिभयाऽधिकयाऽथ च संपदा।
परिवृतोऽतितरां हि विराजते मनुजदेव मदेन विना भवान्॥

यत्र प्रशस्तप्रभुत्वादिगुणास्तत्र मदोऽवश्यंभावी, स च प्रकृते नास्तीति विनाकृतस्य वर्ण्यस्य रमणीयत्वात् विनार्थसंबन्धस्य सुन्दरत्वम्। अरमणीयत्वे यथा—

संपदा संपरिष्वक्तो विद्यया चाऽनवद्यया।
नरो न शोभते लोके हरिभक्तिरसं विना॥

अत्र हरिभक्तिरसेन विनाकृतस्य अरमणीयत्वम्। 'जलं विना मरुर्दुष्टः' इत्यादावसौन्दर्यान्न विनोक्त्यलंकार इति वदन्ति। अत्रापि लक्षणे अर्थग्रहणस्य प्राग्वदेव प्रयोजनं बोध्यम्॥ २३॥

## यत्र प्रस्तुतधर्मिको व्यवहारः सारूप्यसाधारणविशेषणाऽन्यतरमात्रोपस्थापिताऽप्रस्तुतधर्मिकव्यवहाराऽभेदेन भासते सा समासोक्तिः॥

सारूप्यं नाम शुद्धसादृश्यम् । तच्च प्रस्तुताऽप्रस्तुतवृत्तान्तयोः । विशेषणानां साधारण्यं श्लेषकृतं शुद्धं वा । उदाहरणम्—

कविप्रसूतां कवितां नितान्तं रम्यां रसेनोपचितप्रतीकाम् ।
संस्कृत्य दत्तां करतो गृहीत्वा चुम्बत्यभीक्ष्णं बत वासुदेवः ॥

अत्र श्रीवासुदेवाख्यप्रस्तुतधर्मिकर्तृको नितान्तरम्यत्वादिगुणविशिष्टशुद्धलेखनादिसंस्कारपूर्वकसमर्पितकविताकर्मकः करग्रहणपूर्वकपठनादिप्रयुक्तसुखसंबन्धरूपचुम्बनव्यवहारः प्रकृतः शक्त्या प्रतीयते । तदुत्तरक्षणे च विशेषणसाम्यबलात् कविताशब्दगतस्त्रीलिङ्गात् वासुदेवशब्दगतपुंलिङ्गाच्च अप्रस्तुतधर्मिभूतपतिकर्तृको नितान्तरम्यत्वादिगुणविशिष्टविवाहसंस्कारपूर्वकसमर्पितकान्ताकर्मकः करग्रहणपूर्वकवक्त्रसंयोगरूपचुम्बनव्यवहारोऽप्रकृतः प्रतीयत इत्यत्र सहृदयाः प्रमाणम् । तदभेदेन च प्रकृतव्यवहारो भासते सहृदयान्प्रतीति लक्षणानुगमः । विशेषणानां श्लेषकृतसाधारण्येनेयं समासोक्तिरुदाहृता । शुद्धसाधारण्येन यथा—

व्यावलगत्कुचभारमाकुलकचं व्यालोलहारावलि
प्रेङ्खत्कुण्डलशोभिगण्डयुगलं प्रस्वेदि वक्त्राम्बुजम् ।
शश्वद्दत्तकरप्रहारमधिकश्वासं रसादेतया
यस्मात्कन्दुक सादरं सुभगया संसेव्यसे तत्कृती ॥

अत्र सुभगया सेव्यमानस्य प्रस्तुतधर्मिणः कन्दुकस्य वृत्तान्तः प्रकृतः शक्त्या प्रतीयमानो व्यावलगत्कुचभारमित्यादिशुद्धसाधारणविशेषणबलात् कन्दुकशब्दगतपुंलिङ्गाच्च प्रतीयमानेन विपरीतसुरतासक्तनायिकया सेव्यमानस्याऽप्रस्तुतधर्मिणः कामुकस्य वृत्तान्तेनाऽप्रकृतेन सहाऽभिन्नतया भासते । सारूप्येण यथा—

आपेदिरेऽम्बरपथं परितः पतङ्गा
भृङ्गा रसालमुकुलानि समाश्रयन्त ।
संकोचमञ्चति सरस्त्वयि दीनदीनो
मीनो नु हन्त कतमां गतिमभ्युपैतु ॥

अत्र प्रस्तुतधर्मिणः क्षीणसरसो वृत्तान्तो वर्ण्यमानस्तत्सारूप्यबलादवगतेनाऽप्रस्तुतधर्मिभूतक्षीणराजादितदेकावलम्बपुरुषादिवृत्तान्तेनाऽप्रकृतेन सहाऽभिन्नतया भासते सहृदयान्प्रतीति लक्षणसमन्वयः । सरोवृत्तान्तस्य प्रस्तुतत्वविवक्षायां राजवृत्तान्तस्य च अप्रस्तुतत्वविवक्षायामिदं सारूप्यनिबन्धनायाः समासोक्तेरुदाहरणम् । तद्वैपरीत्ये त्वप्रस्तुतप्रशंसायाः । उभयोः प्रस्तुतत्वे प्रस्तुताङ्कुरस्य । समासोक्तौ हि विशेषणसाम्यमहिम्ना सारूप्यमहिम्ना वा प्रतीतोऽप्रकृतव्यवहारः स्वानुगुणं नायिकादिमर्थमाक्षिप्य तेन परिपूर्णविशिष्टशरीरः प्रकृतव्यवहारे स्वावयवतादात्म्यापन्नतदवयवोऽभेदेनाऽवतिष्ठते । तस्य च प्रकृतात्मनैव कार्योपयोगित्वं परिणामवत् । यत्र प्रकृतधर्मिण उपादानमप्रकृतधर्मिणश्चाऽनुपादानं सोऽस्या विषयः ॥ २४ ॥

## विशेषणानां साभिप्रायत्वं परिकरः ॥

साभिप्रायत्वं च प्रकृतार्थोपपादकचमत्कारजनकव्यञ्जनावृत्तिबोध्यार्थकत्वम् । उदाहरणम्—

कविकल्पद्रुमोऽयमहो लक्ष्म्याश्लिष्टो वसुंधरापालः ॥
आकिंचन्योपेतं कुलं कवीनां बिभर्ति सानन्दम् ॥

अत्र कविकुलश्रमानुरूपभरणसामर्थ्याभिप्रायगर्भाणि पूर्वार्धोपात्तानि विशेषणानि । भरणाऽवश्यकत्वाभिप्रायगर्भं च तृतीयचरणात्मकं कविकुलविशेषणम् । साभिप्रायानेकविशेषणोपन्यासे एवाऽयमलंकार इति प्राञ्चः । नव्यास्तु साभिप्रायैकविशेषणोपन्यासेऽप्ययं भवति । यथा—"सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः ।" अत्र सुधांशुकलितोत्तंस इत्येकस्यैव विशेषणस्य तापहरणसामर्थ्यरूपो व्यङ्ग्योऽर्थः शिवकर्तृकतापहरणोपपादक इति ॥ २५ ॥

## विशेष्यस्य साभिप्रायत्वं परिकराङ्कुरः ॥

अत्रापि साभिप्रायत्वं प्राग्वदेव परिष्करणीयम् । उदाहरणम्—

धन्यो जगत्यामयमर्थपालश्चतुर्भुजो यद्धृदयाब्जकोशे ।
वसन्नजस्रं चतुरः पुमर्थान् दातुं समर्थोऽतितरां चकास्ति ॥

अत्र चतुर्भुज इति विशेष्यं युगपच्चतुर्विधपुरुषार्थदानसामर्थ्याभिप्रायगर्भम् । चतुर्भिः करैश्चतुर्णां पुरुषार्थानां युगपद्दानस्य सौकर्यात् । यथा वा—

फणीन्द्रस्ते गुणान् वक्तुं लिखितुं हैहयाधिपः ।
द्रष्टुमाखण्डलः शक्तः क्वाहमेष क्व ते गुणाः ॥

अत्र सहस्रवदनाद्यभिप्रायगर्भाणि फणीन्द्रेत्यादिविशेष्यपदानि बहूनीति पूर्वस्माद्विशेषः । अयं च परिकरान्नातिरिच्यत इति मते परिकरलक्षणगतस्य विशेषणानामित्यंशस्य स्थाने पदानामित्यंशो निवेशनीयः । तेनोभयत्रापि *लक्षणप्रवृत्तिः* । केचित्तु *विशेषणानामि*ति विशेष्योपलक्षणपरमिति व्याख्याय परिकरे परिकराङ्कुरमन्तर्भावयन्ति ॥ २६ ॥

---

**गूढस्यापि प्रकाशं प्राप्तस्य कस्यचिदर्थस्य केनाऽपि मिषेण गोपनं व्याजोक्तिः ॥**

अपह्नुतौ हि उपमेयतावच्छेदकनिषेधपूर्वकमुपमानतादात्म्यस्थापनम् । अत्र तु किंचिदनिषिध्यैव गूढस्यापि लिङ्गादिना प्रकाशं प्राप्तस्य कस्यचिदर्थस्य अतात्त्विककारणाद्युपन्यासेन गोपनमात्रम् । तेन

सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम् ।
नागरिकः किं मिलितो नहि नहि सखि हैमनः पवनः ॥

इत्यादौ गूढस्यापि सीत्कारादिना प्रकाशं प्राप्तस्य नायकरूपस्य किंचिदर्थस्य हैमनः पवन इत्युक्त्या गोपनेऽपि न व्याजोक्तिः । किंतु नायके उपमेयतावच्छेदकभूतं नायकत्वं नहि नहीत्यनेन निषिध्य उपमानभूतहैमनपवनतादात्म्यस्य स्थापनादपह्नुतिरेवेत्याहुः । उदाहरणम्—

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंष्ठुलाऽखिलविधिव्यासङ्गभङ्गाकुलः ।
हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥

अत्र शिवगतस्य पार्वतीविषयकरतिभावरूपस्य किंचिदर्थस्य गूढस्यापि तत्कार्यभूताभ्यां कम्पपुलकाभ्यां प्रकाशं प्राप्तस्य तयोः कम्पपुलकयोः शैलेन्द्रशैत्यकारणकत्वप्रदर्शनपरोक्तिमिषेण शिवकर्तृकं गोपनम् । यथा वा—" त्वामालिखन्ती दृष्ट्वाऽन्यं धनुः पौष्पं करेऽलिखत् । " अत्र नायकं प्रति नायिकाविषयकदूतीवाक्ये गूढस्यापि नायकाऽऽलेख्यलेखनेन प्रकाशं प्राप्तस्य तद्विषयकानुरागस्य तत्करे पुष्पचापलेखनक्रियया मन्मथोऽयं मया लिखित इति प्रदर्शनपरया नायिकाकर्तृकं गोपनम् । पूर्वत्र उक्त्या गोपनम् । इहतु क्रिययेति भेदः । एतेन द्वितीयोदाहरणे क्रियया गोपनाद्युक्त्यलंकार इति वदन्तः प्रत्युक्ताः । तस्य व्याजोक्त्यैव गतार्थत्वात् ॥ २७ ॥

## श्रुत्यैकयाऽनेकार्थप्रतिपादनं श्लेषः ॥

स च द्विविधः । अर्थश्लेषः शब्दश्लेषश्चेति । उदाहरणम्—

प्रवर्तयन् क्रियाः साध्वीर्मालिन्यं हरितां हरन् ।
महसा भूयसा दीप्तो विभाति च विभाकरः ॥

अत्र विभाकरपदवाच्यो राजविशेषो मार्तण्डश्चेत्युभयार्थपराणि 'प्रवर्तयन् क्रियाः साध्वीः' इत्यादीनि विशेषणभूतानि वाक्यानि । 'प्रवर्तयन् क्रियाः साध्वीः' इत्यादीनां 'कारयन् कर्म विमलम्' इत्यादिपर्यायपरिवृत्तिसहत्वादर्थश्लेषोऽयम् । विभाकर इत्यंशे तु तस्य पर्यायपरिवृत्तिसहत्वाभावात् शब्दश्लेषः । केचित्तु विभाकरशब्दः शक्त्या सूर्यं बोधयति, योगेन च नृपं बोधयतीत्येतदंशेऽप्यर्थश्लेषः। प्रभाकरादिपर्यायशब्दपरिवृत्तिसहत्वादित्याहुः । शब्दश्लेषो यथा—

गोत्राविता मन्त्रकरोऽतिभूतिर्दुर्गाधिनाथो द्विजराजभर्ता ।
चक्रिप्रियः संश्रयणीय एव श्रीवासुदेवः कविभिः शिवो वा ॥

अत्र मकृच्छ्रवणेनैव शिववासुदेवयोरनुरूपाऽनेकार्थप्रतिपादकानि गोत्रावितेत्यादिविशेषणानि । गोत्राविता, दुर्गाधिनाथ इत्यत्र सभङ्गश्लेषः । गोत्रस्याऽविता गोत्राया अविता, दुर्गस्याऽधिनाथ दुर्गाया अधिनाथ इति पदभङ्गद्वारा अनुरूपाऽनेकार्थप्रतिपादकत्वात्। अन्यत्र त्वभङ्गः । परस्परविलक्षणं पदभङ्गमनपेक्ष्याऽनेकार्थप्रतिपादकत्वात् । यद्यप्ययं श्लेषः प्रायेणाऽलंकारान्तरस्य विषयमभिनिविशते, तथापि 'सर्वदो माधवः पायाद्योऽगंगां समदीधरत् । ' इत्यादावलंकारान्तरसंभावनारहिते सावकाशत्वान्नालंकारान्तरस्य बाधकः । प्रत्युत तेनैव स्वविषयेऽयं बाध्यत इत्येके । संकीर्ण इत्यपरे ॥ २८ ॥

## श्लेषेण काका वाऽभिप्रेतातिरिक्तार्थस्य कल्पनं वक्रोक्तिः ॥

श्लेषमूलका वक्रोक्तिस्तु द्विविधा । अर्थश्लेषेण शब्दश्लेषेण चेति । उदाहरणम्—

भिक्षार्थी स क्व यातः ? सुतनु बलिमखे, ताण्डवं क्वाऽद्य भद्रे?
मन्ये वृन्दावनान्ते क्व नु स मृगशिशुर् ? नैव जाने वराहम् ।
बाले कच्चिन्न दृष्टो जरठवृषपतिर् ? गोप एवाऽस्य वेत्ता,
लीलासंलाप इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां नः ॥

अत्र हरार्थमभिप्रेत्य लक्ष्म्याः प्रश्नः । वामनादिमूर्त्तिधारिहरिरूपमर्थान्तरं परिकल्प्य पार्वत्या उत्तरम् । भिक्षार्थीत्यादिपदानां पर्यायशब्दपरिवृत्तिसहत्वादिदमर्थश्लेषेण वक्रोक्तेरुदाहरणम् । शब्दश्लेषेण वक्रोक्तिर्यथा—'मुञ्च मानं दिनं प्राप्तं नेह नन्दी हरान्तिके । ' अत्र मानं मुञ्च प्रभातं संजातमित्यभिप्रेतार्थके नायकवाक्ये नन्दिनं प्राप्तं मा मुञ्चेत्यर्थान्तरं नायिकया शब्दश्लेषेण कल्पितम् । तत्र नेह नन्दी यत्युत्तरेण स्फुटीभवति । इदमविकृतशब्दश्लेषेण वक्रोक्तेरुदाहरणम् । विकृत शब्दश्लेषेण वक्रोक्तिर्यथा—

भवित्री रम्भोरु त्रिदशवदनग्लानिरधुना
स ते रामः स्थाता न युधि पुरतो लक्ष्मणसखः ।

इयं यास्यत्युच्चैर्विपदमधुना वानरचमू-
र्लघिष्ठेदं पष्ठाक्षरपरविलोपं पठ पुनः ॥

अत्र पादत्रयात्मकं सीतां प्रति रावणवाक्यम् । तं प्रति च चतुर्थपादात्मकं सीतावाक्यम् । तत्र 'मम जयो भविता, रामस्य तु पराभवो भविता' इत्यभिप्रेतार्थके रावणवाक्ये पादत्रयात्मके षष्ठाक्षरात् पराणां त्रि-न-वि-इति त्रयाणां वर्णानां लोपात्मकेन विकारेण 'रामस्य जयो भविता, तव तु पराभवो भविता' इत्यर्थान्तरं सीतया कल्पितम् । काकुर्ध्वनेर्विकारस्तस्योदाहरणं यथा—

असमालोच्य कोपस्ते नोचितोऽयमितीरिता ।
नैवोचितोऽयमिति तं ताडयामास मालया ॥

अत्र नैवोचित इति काका उचित एवेत्यर्थान्तरकल्पनम् । इयं च वक्रोक्तिः शब्दालंकार इत्यन्ये । अर्थालंकार इति परे ॥ २९ ॥

---

**अप्रस्तुतेन व्यवहारेण सादृश्याद्यन्यतमप्रकारेण प्रस्तुतव्यवहारो यत्र प्रशस्यते साऽप्रस्तुतप्रशंसा ॥**

आदिना कार्यकारणभावः सामान्यविशेषभावश्च । एवं च अप्रस्तुतेन स्वसदृशं प्रस्तुतं गम्यते यस्यामित्येका । कार्येण कारणमिति द्वितीया । कारणेन कार्यमिति तृतीया । सामान्येन विशेष इति चतुर्थी । विशेषेण सामान्यमिति पञ्चमीति पञ्चविधेयम् । प्रशंसनं च वर्णनमात्रम्, नतु स्तुतिरेव । उदाहरणम्—

एको विधुर्जयति सर्वनभश्चरेषु
यः संचितामृतकलार्पणतोऽमरेन्द्रान् ।
शश्वद्बिभर्ति च तदक्तकरैश्चकोरान्
रत्नाकरोऽपि नरिनर्ति यदीययोगात् ॥

अत्र अप्रस्तुतेन विधुव्यवहारेण वाच्येन कविभरणप्रजारञ्जनचक्रवर्तिसंतोषणपरस्य वर्णनीयत्वेनाऽभिमतस्य नृपस्य व्यवहारः प्रस्तुतः प्रतीयते । अस्यां च वाच्यार्थः क्वचित् प्रतीयमानार्थं त पं

नापेक्षते। यथोक्तोदाहरणे चन्द्रे उक्तविशेषणानामबाधान्न प्रतीयमानार्थतादात्म्यापेक्षा। क्वचिच्च स्वगतविशेषणान्वययोग्यतामासादयितुं प्रतीयमानार्थतादात्म्यमपेक्षते। यथा—

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते।
वामेनाऽत्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकरणे मार्गस्थितस्यापि मे॥

अत्र वाच्येन अप्रस्तुतशाखोटकव्यवहारेण निर्विण्णपुरुषविशेषव्यवहारः प्रस्तुतः प्रतीयते। अत्र च जडस्य वाच्यशाखोटकस्य वचनमतिवचनसंबोधनाद्यन्वययोग्यताया अभावात् तत्संपादनाय गम्यमानार्थतादात्म्यापेक्षा। यथा वा—

नितरां नीचोऽस्मीति त्वं खेदं कूप मा कदापि कृथाः।
अत्यन्तसरसहृदयो यतः परेषां गुणग्रहीताऽसि॥

अत्र वाच्येन अप्रस्तुतकूपव्यवहारेण खिन्नपुरुषविशेषव्यवहारः प्रस्तुतः प्रतीयते। अत्र च वाच्यकूपस्य नीचत्वादिविशेषणान्युपपद्यन्त एवेति न तदंशे प्रतीयमानार्थतादात्म्यापेक्षा। जडस्य तु तस्य संबोध्यत्वं खिन्नत्वं च नोपपद्यत इति तदंशे एव प्रतीयमानार्थतादात्म्यापेक्षा। एवं च पूर्वत्र साकल्येन प्रतीयमानार्थतादात्म्यापेक्षा। इह तु अंशेनेति विशेषः। किंच पूर्वोदाहरणद्वये न श्लिष्टविशेषणा अप्रस्तुतप्रशंसा। इह तु श्लिष्टविशेषणेति चाऽपरो विशेषः। उदाहरणत्रयेऽपि वाच्येन अप्रस्तुतव्यवहारेण प्रस्तुतव्यवहारप्रतीतौ सादृश्यं मूलमिति सादृश्यमूलकेयमुदाहृता। कार्येण कारणं गम्यं यथा—

त्वदङ्गमार्दवे दृष्टे कस्य चित्ते न भासते।
मालतीशशभृल्लेखाकदलीनां कठोरता॥

अत्र अप्रस्तुतेन मालत्यादिगतकाठोर्यरूपेण कार्येण वाच्येन नायिकाङ्गानां सौकुमार्यातिशयः कारणं प्रस्तुतं गम्यते। कार्यका-

रणभावश्चेह ज्ञानयोः । नहि सौकुमार्यातिशयेन मालत्यादिषु काठोर्यं जन्यते । किंतु सौकुमार्यातिशयज्ञानेन काठोर्यज्ञानं जन्यत इति । कारणेन कार्यं गम्यं यथा—

आनम्य वल्गुवचनैर्विनिवारितेऽपि
रोपात्प्रयातुमुदिते मयि दूरदेशम् ।
बाला कराङ्गुलिनिदेशवशंवदेन
क्रीडाबिडालशिशुनाऽऽशु रुरोध मार्गम् ॥

अत्र प्रवासान्निवृत्तोऽस्मीति प्रस्तुतं कार्यं बिडालकरणकमार्गोपरोधेनाऽप्रस्तुतेन कारणेन वाच्येन गम्यते । सामान्येन विशेषो यथा—

सौहार्दस्वर्णरेखाणामुच्चावचभिदाजुषाम् ।
परोक्षमिति कोऽप्यस्ति परीक्षानिकषोपलः ॥

अत्र अप्रस्तुतेन सामान्येनाऽर्थेन वाच्येन 'प्रत्यक्षमिव परोक्षेऽपि मद्धितमाचरसि चेत्त्वमुत्तमः सुहृत्' इति विशेषोऽर्थः प्रस्तुतो गम्यते । विशेषेण सामान्यं यथा—

अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः ।
केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥

अत्र पूर्वप्रस्तावानुसारेण 'क्रूर एव ख्यातिमाग्भवति न मृदुः' इति सामान्यं प्रस्तुतमप्रस्तुतेन विशेषार्थेन वाच्येन गम्यते । समासोक्तौ हि प्रस्तुतव्यवहारेण वाच्येन अप्रस्तुतव्यवहारः प्रतीयते । अत्र तु अप्रस्तुतव्यवहारेण वाच्येन प्रस्तुतव्यवहारः प्रतीयत इतीयं समासोक्तिविपरीतव्यवती ॥ ३० ॥

**प्रस्तुतेन व्यवहारेण प्रस्तुतव्यवहारो यत्र प्रशस्यते स प्रस्तुताङ्कुरः ॥**

उदाहरणम्—

लघुरहमिति खेदं मा गमः कूप तावत्
निखिलगुणिजनस्त्वज्जीवनेनातिवृत्तः ।

असकृदिह पुनस्त्वां शंसति प्रेमपूर्णी
गुरुमपि जलधिं नो जीवनार्थ्यप्युपैति ॥

अत्र कूपव्यवहारो नृपव्यवहारश्च द्वावपि प्रस्तुतत्वेनाऽभिमतौ । तत्र कूपव्यवहारेण वाच्येन वर्णनीयनृपव्यवहारः प्रतीयते । तत्र च प्राग्वत्सादृश्यमेव मूलम् । अयं चाऽप्रस्तुतप्रशंसातो नातिरिच्यत इत्येके । तन्मते अप्रस्तुतप्रशंसालक्षणघटकस्य अप्रस्तुतेनेत्यस्याऽप्रधानेनेत्यर्थो बोध्यः । तेन चाऽत्र विवक्षावशात्कूपनृपव्यवहारयोः सामान्यतः प्रस्तुतत्वेऽपि नृपव्यवहारापेक्षया वाच्यस्यापि कूपव्यवहारस्याऽप्राधान्यात् तल्लक्षणप्रवृत्तिः । 'एको विधुर्जयति' इत्यादौ तु सुतरामप्राधान्यं विधुव्यवहारस्येति न दोषः । परे तु यत्र द्वयोरपि सममेव प्राधान्यं सहृदयानुभवसिद्धं तत्राऽप्रस्तुतप्रशंसाया अनवतारात् प्रस्तुताङ्कुरोऽलंकारान्तरतयाऽभ्युपेय इति । अथ सादृश्यमूलक इव संबन्धान्तरमूलकोऽपि प्रस्तुताङ्कुरः संभवति । यथा—

रात्रिः शिवा काचन संनिधत्ते विलोचने जाग्रतमप्रमत्ते ।
समानधर्मा युवयोः सकाशे सखा भविष्यत्यचिरेण कश्चित् ॥

अत्र शिवरात्रिमाहात्म्यवर्णनाङ्गत्वेन शिवसरूपताप्राप्तिरिव तदेकदेशतृतीयललाटलोचनप्राप्तिरपि प्रस्तुतैव । तत्र वाच्यया प्रस्तुतललाटलोचनप्राप्त्या प्रस्तुतकृत्स्नशिवसरूपताप्राप्तिर्गम्यते । तत्र च एकदेशैकदेशिभावसंबन्धो मूलम् । एवं कार्यकारणभावादिसंबन्धमूलकोऽप्यूहनीय इत्याहुः ॥ ३१ ॥

---

## विवक्षितार्थस्य भङ्ग्यन्तरेण प्रतिपादनं पर्यायोक्तम् ॥

येन रूपेण विवक्षितोऽर्थस्तदतिरिक्तः प्रकारश्चमत्कृतिजनको भङ्ग्यन्तरम् । उदाहरणम्—

सरस्वती क्रीडति यत्र यत्र स्वभावसिद्धं खलु मत्सरं स्वम् ।
उत्सृज्य लक्ष्मीर्भवति प्रभावात् तवाऽनुरक्ता नृप तत्र तत्र ॥

अत्र निखिलविद्वद्व्रयस्त्वया स्थिरसंपत्तिः समर्प्यत इति विवक्षितोऽर्थो न ताद्रूप्येणोक्तः किंतु त्वत्प्रभावेण विद्वत्स्वनुरक्ता भवतीत्याकारेण। यथा वा—

सूर्याचन्द्रमसौ यस्य वासो रञ्जयतः करैः।
अङ्गरागं सृजत्यग्निस्तं वन्दे परमेश्वरम्॥

अत्र गगनाम्बर इति विवक्षितोऽर्थः सूर्यचन्द्रकररज्यमानवस्त्र इत्याकारेण, भस्माङ्गराग इति विवक्षितोऽर्थोऽग्निसृज्यमानाङ्गराग इत्याकारेण च निरूपितः। एकस्यैव विवक्षितार्थस्य वाग्भङ्गीनामनल्पत्वात् बहुभिराकारैः प्रतिपादनं संभवति। यथा—' इह भवद्भिरागन्तव्यम् ' इति रूपेण विवक्षितस्यार्थस्य ' अयं देशोऽलंकर्तव्यः। सफलजन्मा कर्तव्यः। देशस्यास्य भाग्यान्युज्जीवनीयानि। तमांसि तिरस्करणीयानि। अस्माकं नयनयोः संतापो हरणीयः। मनोरथः पूरणीयः। ' इत्यादिभिर्बहुभिराकारैर्निरूपणम्॥ ३२॥

## कस्यचिद्वस्तुन उत्कटसमृद्धियोगोऽङ्गतया महतामुपादानं वोदात्तम्॥

अङ्गतया विशेषणतया। महतामुदारचरितानाम्। उदाहरणम्—

मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका
यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम्॥

अत्र कस्यचिद्वस्तुनो विद्वद्भवनस्य मुक्तादिधनरूपाया उत्कटसमृद्धेर्योगः। अपरप्रकारो यथा—

श्रीरुद्रदेवः स्वयमेव तावदुद्भूय यत्र स्वगुणैरनर्घैः।
विश्वं समग्रं समलंचकार वंशः स तेऽयं प्रथितो धरेन्द्र॥

अत्र कस्यचिद्वस्तुनो वर्णनीयवंशस्य उपात्तः श्रीरुद्रदेवोऽङ्गम्॥ ३३॥

**प्रथमप्रतीताभ्यां निन्दास्तुतिभ्यां स्तुतिनिन्दयोः क्रमेण पर्यवसानं व्याजस्तुतिः ॥**

प्रथमप्रतीतिश्च शब्दत एव । इयं च निन्दामुखेन स्तुतिः स्तुतिमुखेन च निन्देति प्रकारद्वयवतीति फलितम् । उदाहरणम्—

स्तेनो न चैव मयि शासति भूतलेऽस्मि-
न्नेवंविधं तव वचो न मृषा कथं यत् ।
पाणिं त्वमेव सुरपादपदानकीर्तेः
स्तेनं बिभर्षि वसुधामघवन् स्वपार्श्वे ॥

अत्र राजवर्णनप्रस्तावे प्रथमं शब्दतः प्रतीताऽपि निन्दा बाधिता सती स्तुतौ पर्यवस्यति । अयं च निन्दामुखेन स्तुतिरिति प्रथमः प्रकार उदाहृतः । स्तुतिमुखेन निन्देति द्वितीयप्रकारस्योदाहरणं यथा—

किमहं वदामि खल दिव्यमते गुणपक्षपातमभितो भवतः ।
गुणशालिनो निखिलसाधुजनान्यदहर्निशं न खलु विस्मरसि ॥

अत्र खलदुश्चरितोत्कीर्तनप्रस्तावे प्रथमं शब्दतः प्रतीताऽपि स्तुतिर्बाधिता सती निन्दायां पर्यवस्यति । यथा वा—

अर्धं दानववैरिणा गिरिजयाऽप्यर्धं शिवस्याऽऽहृतं
देवेत्थं जगतीतले स्मरहराऽभावे समुन्मीलति ।
गङ्गासागरमम्बरं शशिकला नागाधिपः क्ष्मातलं
सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मां च भिक्षाटनम् ॥

अतिचिरकालं कृतायामपि राजसेवायां ततो धनस्याप्राप्त्या निर्विण्णस्य भिक्षो राजानं प्रत्युक्तिरियम् । अत्र सर्वज्ञः सर्वेश्वरश्चासीति राज्ञः स्तुत्या व्याजरूपया मदीयं विद्वत्त्वदारिद्र्यादि जानन्नपि बहुप्रदानेन रक्षितुं शक्तोऽपि मह्यं न किमपि ददासीत्युपालम्भरूपा निन्दा प्रतीयते । इयं च व्याजस्तुतिर्यस्यैव वस्तुनः स्तुतिनिन्दे प्रथममुपक्रम्येते तस्यैव चेन्निन्दास्तुत्योः पर्यवसानं भवेत्तदा भवति । वैयाधिकरण्ये तु नेति चिरंतनानां संकेतः । तेन वैयधिकरण्यप्रयुक्त-

भेदानां नालंकारत्वं किंतु व्यङ्ग्यभेदत्वमित्येके। अन्ये तु वैयधिकरण्यमयुक्तभेदानामप्यलंकारत्वम्। यथा—

कस्त्वं वानर रामराजभवने लेखार्थसंवाहको
यातः कुत्र पुराऽऽगतः स हनुमान्निर्दग्धलङ्कापुरः।
बद्धो राक्षससूनुनेति कपिभिः संताडितस्तर्जितः
स व्रीडात्तपराभवो वनमृगः कुत्रेति न ज्ञायते॥

इयं हि रावणस्य श्रीरामदूतस्याऽङ्गदस्य च प्रश्नोत्तररूपोक्तिः। अत्र हनुमन्निन्दया इतरवानरस्तुतिः प्रतीयते। यथा वा—

यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूपे न चाटून् मृपा
नैषां गर्ववचः शृणोषि न च तान् प्रत्याशया धावसि।
काले बालतृणानि खादसि परं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः॥

अत्र हरिणस्तुत्या राजसेवाधीनपुरुषनिन्दा प्रतीयत इति॥१४॥

## एकस्य निन्दया तदन्यस्य निन्दायाः प्रतीतिर्व्याजनिन्दा॥

उदाहरणम्—

हेमाद्रे तनुसञ्चयाय ननु भो राज्ञोऽस्य हस्ते पुन-
श्चेदायासि न याहि मा वससि चेद् द्वीपान्तरे त्वं वस।
को दोषस्तव तत्र किंतु चतुरास्यस्यैव दोषो महान्
यस्तावत्त्वयि नो विवेककणिकामेकामपि न्यस्तवान्॥

अत्र चतुराननिन्दया मेरोर्निन्दा प्रतीयते। यथा वा—

विधिरेव विशेषगर्हणीयः करट त्वं रट कस्तवापराधः।
सहकारतरौ चकार यस्ते सह वासं सरलेन कोकिलेन॥

अत्रापि विधिनिन्दया काकनिन्दा प्रतीयते। अस्याश्च पूर्वोक्तचिरंतनसंकेतानुसरणे नालंकारत्वं किंतु व्यङ्ग्यभेदत्वम्। तत्संकेतानुसारिभिस्तु व्याजनिन्दात्वेन अलंकारेषु परिगणितेयम्॥१५॥

## चमत्कृत्याधायको निषेध आक्षेपः ॥

निषेधश्च क्वचित् व्यङ्ग्यः क्वचित् तदितरः। एतेन मतभेदप्रयुक्तनिखिलाऽऽक्षेपभेदानां संग्रहः। उदाहरणम्—

चिन्तारत्नं निखिलदमिति स्तूयते प्राज्ञवर्गै-
स्तत्प्रादुर्भवति सकलाभीष्टपूर्णो जनः स्यात्।
किं वाऽऽशंसेयमिह किमिति प्रार्थितार्थप्रदाता
भूपालोऽयं निवसतु चिरं रत्नगर्भातलेऽस्मिन् ॥

अत्र पूर्वार्धे चिन्तारत्नस्य चिन्तितार्थप्रदत्वात् तत्प्रादुर्भावो जनमनोरथपूरणाय आकाङ्क्षित'। पश्चाद्विचारे प्रकृतनृपचिरस्थित्यैव जनमनोरथपूर्तिः स्यादिति मनसि निश्चित्य किंवेत्याद्युत्तरार्धेन पक्षान्तरमाश्रित्य पूर्वार्धोक्तपक्षस्य निषेधो व्यञ्जितः। यथा वा—

गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥

मरणं विना पुनर्जन्म न संभवति, तथाऽत्र प्रार्थितमिति त्वयि देशान्तरं गते मन्मरणस्याऽवश्यंभावित्वात् त्वं मा गच्छेति नायिकाकर्तृको नायकगमननिषेधो गम्यते। व्यङ्ग्येतरो यथा— "नाहं दूती तनोस्तापस्तस्याः कालाऽनलोपमः।" अत्र दूत्या एवोक्तौ नाऽहं दूतीति दूतीत्वनिषेधो बाधितत्वादाभासरूपः संघटनकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्यवस्यन्निदानीमेवागत्य नायिकोज्जीवनीयेति विशेषमाक्षिपति। यथा वा—

ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः।
अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-
व्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे ॥

अत्र भवन्तीत्येतदन्तमुक्त्वाऽपि 'न ब्रूमहे' इति पुनस्तन्निषेधो वाच्यो वियोगिनीनां ज्योत्स्नादि स्फुलिङ्गायत इति प्रसिद्धमेवेति विशेषमाक्षिपति। अत एव तस्य चमत्कृतिजनकत्वम्। 'नायं देवदत्तः' इत्यादौ निषेधस्य चमत्कृत्यनाधायकत्वान्नाक्षेपत्वम् ॥३६॥

## प्रथमं प्रतीयमानः पश्चादर्थान्तरप्रतीत्या निवर्तमानो विरोधो विरोधाभासः ॥

विभावनादिषु वक्ष्यमाणविरोधमूलकाऽलंकारेष्वतिव्याप्तिवारणाय तद्भिन्न इत्यपि विशेषणं देयम् । यत्र अपिशब्दादिर्विरोधद्योतकः प्रयुज्यते तत्र विरोधाभासः शाब्दः । अन्यत्र त्वार्थः । उदाहरणम्—

भोः पृथ्वीभृदपि विरुद्धभावभाजो
विद्यन्ते भवति गुणा इति प्रतीमः ।
नैवं चेद्धनभृदपि ध्रुवं कथं वा
प्रव्यक्तं त्वमधनभृद्धरातलेऽसि ॥

अत्र यो धनभृत् स एवाऽधनभृत् न संभवतीति स्पष्टमेव प्रथमं विरोधः प्रतीयते । पश्चात्तु अधनभृदित्यस्य दरिद्रपोषणकर्तेत्यर्थान्तरप्रतीत्या स निवर्तते । यथा वा—" यः किल बालकोऽपि पुराणपुरुषः " इति भगवद्वर्णने बालत्ववृद्धत्वयोर्विरोधः । स च मायिकबालत्वम् अनादित्वं चेत्यर्थान्तरप्रतीत्या निवर्तते । अयं च श्लेषमूलक उदाहृतः । शुद्धो यथा—" अस्य पुरुषस्य चन्द्रोऽपि तिग्मांशुर्भवति " अत्र चन्द्रत्वतिग्मांशुत्वयोः पुरः स्फुरन्नपि विरोधो विरहिदुःखजनकत्वविमर्शान्निवर्तते । यथा वा—

पेलवमपि खलवचनं दहतितरां मानसं सतत्वविदाम् ।
परुषमपि सुजनवाक्यं मलयजरसवत् प्रमोदयति ॥

अत्र खलवचने पेलवत्वं दाहकत्वेन, सज्जनवचने परुषत्वं प्रमोदकत्वेन च विरुद्धम् । विरोधपरिहारस्तु पेलवत्वं परुषत्वं च तात्कालिकम्, परिणामे तु दाहकत्वं प्रमोदकत्वं चेति विमर्शाद्भवति । व्यधिकरणत्वेन प्रसिद्धयोः समानाधिकरणत्वेनोपनिबन्धने विरोधाभास इति तु तत्वम् । आ ईषत् झटितिजायमानाऽविरोधबुद्धेः प्राग्भासत इत्याभासः । विरोधश्चासावाभासश्चेति विरोधाभासशब्दव्युत्पत्तिवशाच्च अबाधितस्य विरोधस्य नाऽलंकारत्वं किंतु दोषत्वमेव । बाधितस्य तु अलंकारत्वम् । ननु रूपके ' मुखं चन्द्रः '

इत्यादौ विरोधाभासापत्तिरिति चेन्न । तत्र विरोधस्य कविसंरम्भाऽगोचरत्वेनाऽचमत्कारित्वात् । चन्द्राऽभेदस्य तु कविसंरम्भगोचरतयाऽस्त्येव चमत्कारित्वम् । यदा तु विवक्षावशात् तत्र विरोध एव कविसंरम्भगोचरस्तदा स विरोधाभासाऽलंकार एव न रूपकम् । अलंकारवर्गे हि यो यत्र सहृदयचमत्कृतिपथमवतरति स एव तत्राऽलंकार इति सिद्धान्तात् । अस्य जातिगुणक्रियाद्रव्याणां मध्ये जातेर्जातिगुणक्रियाद्रव्यैः, गुणस्य गुणक्रियाद्रव्यैः, क्रियायाः क्रियाद्रव्याभ्याम्, द्रव्यस्य द्रव्येणेति दश भेदा इति प्राञ्चः । जात्यादिभेदानामहृद्यत्वात् श्लेषमूलकत्वेन शुद्धत्वेन च द्वैविध्यमेवेति तु नव्याः ॥ ३७ ॥

---

## कारणव्यतिरेकसामानाधिकरण्येन प्रतिपाद्यमाना कार्योत्पत्तिर्विभावना ॥

व्यतिरेको नाम अभावः । अत्र कारणाऽभावाधिकरणवृत्तित्वेन कार्योत्पत्तौ वर्णितायामापाततो भासमानोऽपि विरोधस्तदितरकारणकल्पनया निवर्तते । अत्र च कार्यांशे द्वयोराहार्योऽभेदबुद्धिरुत्थापिका । सा च अभेदातिशयोक्त्या रूपकेण वा येन केनापि प्रकारेण । इयं च उक्तनिमित्ताऽनुक्तनिमित्ता चेति द्विविधा । उदाहरणम्—

यदा यदाऽऽविष्कुरुते रसान्वितां वचःप्रणालीं वसुधापुरंदरः ।
तदा हृदालिं शिशिरीकरोत्ययं समस्तराणामपि लेपनं विना ॥

अत्र हि शिशिरीकरणं प्रत्युशीरादिलेपनं कारणम् । तदभावेऽपि शिशिरीकरणमुपनिबध्यमानमापाततो विरुद्धमपि वचःप्रणालीरूपहेतुकतया पर्यवस्यति । ननु शिशिरीकरणमत्र श्रवणजनितआनन्दविशेषो विवक्षितः, ननु शीतलीभावनम् । तं प्रति च लेपनं न कारणम् । तदभावे च उपनिबध्यमानमानन्दविशेषरूपं शिशिरीकरणं न विरुद्धमिति चेन्न । मुख्यं हि शिशिरीकरणं शीतलीभावनम् ।

गौणं च आनन्दविशेषः । तयोश्च गौणमुख्ययोरतिशयोक्तिमूलया आहार्याऽभेदबुद्ध्या पायसादिपिण्डवदेकीकरणात्सति भेदतिरोधाने शीतलीभावनकारणमपि लेपनमानन्दविशेषकारणं संपद्यते । एवं च अंशद्वयात्मकस्य शिशिरीकरणस्य लेपनं कारणम् । तदभावे च उपनिबध्यमानं शिशिरीकरणं विरुद्धमेव । विरुद्धत्वाच्च तस्य गौणांशमादाय पर्यवसानम् । तद्धेतुत्वं च उपात्तायां वच प्रणाल्या पर्यवस्यतीत्युक्तनिमित्तेयम् । अनुक्तनिमित्ता यथा—

विनैव शस्त्रं हृदयानि यूनां विवेकभाजामपि दारयन्त्यः ।
अनन्तमायामयवल्गुलीला जयन्ति नीलाब्जदलायताक्ष्यः ॥

अत्र हि दारणे शस्त्रं कारणम् । तदभावेपि दारणमुपनिबध्यमानमापाततो विरुद्धमपि कामिनीविलासरूपहेतुकतया पर्यवस्यति । अत्र मुख्यं दारणं द्विधाभावनम् । गौणं च कामादिजनितपीडाविशेषः । तयोश्च आहार्याऽभेदबुद्धिः । इयं चाऽनुक्तनिमित्ता । विलासानां मन्मथपीडाजनकानामनुपात्तत्वात् । अथ यद्वैशिष्ट्यं विना कारणस्य कारणता अनुपपन्ना, तद्वैशिष्ट्यस्यैव कारणस्याऽभावो लक्षणे विवक्षितः । तेन 'सातपत्रं दहन्त्याशु प्रतापतपनस्तव ।' इत्यादिविभावनानिखिलभेदेषु निरुक्तलक्षणप्रवृत्तिः । तथा ह्यत्र दाहरूपकार्योत्पत्तौ प्रतिबन्धकाऽभावविशिष्टतपनः कारणं वाच्यम् । तच्च प्रकृते नास्ति । आतपत्ररूपप्रतिबन्धकसद्भावात् । एवं च तादृशकारणाभावेपि दाहरूपकार्योत्पत्तिः स्पष्टैव । कारणाभावप्रतीतिस्तु क्वचित् शाब्दी क्वचिच्च आर्थीत्यन्यदेतत् ॥ ३८ ॥

## प्रसिद्धकारणकलापसामानाधिकरण्येन वर्ण्यमाना कार्योऽनुत्पत्तिर्विशेषोक्तिः ॥

तत्र सत्यपि कारणसमवधाने कार्यस्याऽनुत्पत्तौ प्रतिभासमानो विरोधः प्रसिद्धेतरकारणवैकल्यधिया निवर्तते । उदाहरणम्—

गीताभागवतश्रुतिशिरोर्थदीपे ज्वलत्यपि स्वान्ते ।
नहि काव्यस्नेहभरो नश्यति बत वासुदेवगजर्षेः ॥

अत्र उपनिषदाद्यर्थदीपे निखिलवस्तुस्नेहक्षयहेतौ सत्यपि वाव्यस्नेहक्षयरूपकार्यस्याऽनुत्पत्तिवर्णनात् प्रेमाधिक्यं प्रतिबन्धकं प्रतीयते । एवं च प्रतिबन्धकसद्भावादेव न कार्योत्पत्तिरिति विरोधनिवृत्तिः । स्नेहक्षयाऽनुत्पत्तिनिमित्तस्य प्रतिबन्धकस्याऽनुपात्तत्वादनुक्तनिमित्तेयम् । अत्रैव ' प्रेमपरिपूर्णे ' इति स्वान्तविशेषणकल्पने उक्तनिमित्ता । यथा वा—

प्रतिपलमखिलान् लोकान् मृत्युमुखं प्रविशतो निरीक्ष्यापि ।
रागान्धं चित्तमिदं विरमति नाद्यापि विषयेभ्यः ॥

अत्र सकललोकक्षणभङ्गुरत्वज्ञाने प्रसिद्धवैराग्यहेतौ सत्यपि वैराग्यरूपकार्यस्याऽनुत्पत्तेर्वर्णनम् । अनुत्पत्तिनिमित्तं तु रागाधिक्यम् । तस्य च ' रागान्धम् ' इत्यनेनोक्तत्वादुक्तनिमित्ता । अथ—

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शंभुना न बलं हृतम् ॥

अत्र तनुहरणे कारणे सत्यपि बलहरणरूपकार्यस्याऽनुत्पत्तेः । अनुत्पत्तिनिमित्तं च विशिष्य वक्तुं सहसा न शक्यत इति तृतीयेयमचिन्त्यनिमित्तेत्यन्ये । अनुक्तनिमित्तयैव गतार्थेयमित्यपरे॥३९॥

## कार्यस्याऽसंभावनीयत्ववर्णनमसंभवः ॥

उदाहरणम्—

धरापालास्तावत् क्षितितलगताः सन्ति शतशो
भवानप्येकस्तेष्वितिमतय आसन् खलु जनाः ।
इदं को जानीते निखिलभुवनं कीर्तिसुधया
नितान्तं त्वं कुर्या धवलतरमत्रेति नृपते ॥

अत्र इदमित्यादिना कीर्तिसुधाकरणकनिखिलजगद्धवलीकरणरूपकार्यस्य असंभावितत्ववर्णनम् । अयं च विरोधाभासान्नातिरिच्यत इत्यन्ये । अतिरिच्यत इति परे ॥ ४० ॥

## विरुद्धत्वेनाऽऽपाततो भासमाने हेतुकार्ययोर्वैयधिकरण्यमसंगतिः ॥

यत्र हेतुकार्ययोर्वैयधिकरण्यं न विरुद्धं तत्र तु नाऽसंगत्यलंकारः। अत्र कार्यांशे द्वयोरभेदाध्यवसानमनुप्राणकम्। तच्च अभेदातिशयोक्त्या श्लेषेण वा येन केनापि प्रकारेण। उदाहरणम्—

त्वदीयकीर्तिर्भुवि काननेऽद्रौ द्वीपान्तरेऽपि क्षितिपाल तावत्।
अटत्यजस्रं क्षितिपा हि सर्वे क्लिश्यन्ति चित्रो विधिरेष वेधः॥

अस्मिन्नुदाहरणे क्लिश्यन्तीत्यत्र शरीरबाधामनःपीडयोरभेदाध्यवसायोऽतिशयोक्तिमूलकः। तत्र दुर्गमदेशाऽधिकरणकाऽविरताऽटननिमित्तकं शरीरबाधारूपं कार्यं क्षितिपनिष्ठम्, अटनरूपस्तद्धेतुश्च कीर्तिनिष्ठ इति स्फुटमेव वैयधिकरण्यम्। तच्च विरुद्धम्। अटनकर्तृभिन्ने अटननिमित्तकशरीरबाधारूपकार्यस्थितेरसंभवात्। विरोधनिवृत्तिस्तु मनःपीडांशाविमर्शोत्तरं तं प्रति सततप्रसृत्वरवर्णनीयनृपकीर्त्यसहिष्णुत्वं हेतुरित्यनुसंधानाद्भवति। श्लेषेण यथा—

दृष्टिर्मृगीदृशोऽत्यन्तं श्रुत्यन्तपरिशीलिनी।
मुच्यन्ते बन्धनात् केशा विचित्रा वेधसो गतिः॥

अत्र श्रुतिशब्दस्य वेदः कर्णश्चेति द्वावर्थौ, बन्धनशब्दस्य च संसारो ग्रन्थिश्चेति द्वावर्थौ, श्लेषेणाऽभिन्नौ। तत्र वेदरूपं संसाररूपं चांशमादाय विरोधः। कर्णरूपं ग्रन्थिरूपं चांशमादाय तत्परिहारः। वेदान्तपरिशीलनं हि संसारान्मुक्तिं प्रति हेतुरिति प्रसिद्धमेव। लक्षणे हेतुकार्ययोरिति तु समानाधिकरणमात्रोपलक्षणम्। तेन 'नेत्रं निरञ्जनं तस्याः शून्यास्तु वयमद्भुतम्।' इत्यादौ निरञ्जनत्वशून्यत्वयोः शुद्धसमानाधिकरणत्वेन प्रसिद्धयोरप्यसंगतिः संगच्छते। एवं च समानाधिकरणत्वेन प्रसिद्धयोर्द्वयोर्वैयधिकरण्येनोपनिबन्धनेऽसंगतिः। अथ असंगतेर्भेदान्तरद्वयं दृश्यते। यथा—

अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा।
अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा॥
अपारिजातां वसुधां चिकीर्षन् द्यां तथाऽकरोः।
गोत्रोद्धारप्रवृत्तोऽपि गोत्रोद्भेदं पुराऽकरोः॥

अत्र कृष्णं प्रति शक्रस्य सोपालम्भवाक्ये भुवि चिकीर्षिततया तत्र करणीयमपारिजातत्वं दिवि कृतमित्येकाऽसंगतिः । पुरा गोत्राया उद्धारे प्रवृत्तेन वराहरूपिणा तद्विरुद्धं गोत्राणां दलनं खुरकुट्टनैः कृतमिति द्विविधापि श्लेषोत्थापितेत्याहुः ॥ ४१ ॥

## अननुरूपसंसर्गो विषमम् ॥

अननुरूपसंसर्गत्वं च योग्यतारहितसंबन्धत्वम् । योग्यता च युक्तमिदमिति लौकिकव्यवहारगोचरता । संसर्गश्च द्विविधः । उत्पत्तिलक्षणः संयोगादिलक्षणश्चेति । उदाहरणम्—

घोरो नितान्तं कलिकाल एष पापः सदुच्छेदकरः क तावत् ।
तदाप्तजन्मा सुकृती सदेकाऽऽश्रयोऽतिशान्तोऽयमहो नृपः क ॥

अत्र पापत्वादिगुणविशिष्टकलिकालरूपकारणात् स्वगुणविरुद्धसुकृतित्वादिगुणविशिष्टवर्णनीयनृपरूपकार्योत्पत्तिरित्युत्पत्तिलक्षणस्य संसर्गस्याऽयोग्यत्वम् । कालश्च कार्यत्वावच्छिन्नं प्रति कारणम् । 'जन्यानां जनकः कालः' इत्यभियुक्तोक्तेः । यथा वा—

सिंहिकासुतसंत्रस्तः शशः शीतांशुमाश्रितः ।
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुत' ॥

अत्र आत्मरक्षणसाधनतया निश्चितात् चन्द्राऽऽश्रयणरूपात् कारणादात्मरक्षणरूपकार्योत्पत्तिस्तु दूरापास्ता, प्रत्युत स्वाश्रयस्यापि ग्रासोऽभूदित्युत्पत्तिलक्षणसंबन्धस्याऽयोग्यत्वम् । संयोगादिलक्षणो यथा— "केयं शिरीषमृद्वङ्गी क तावन्मदनज्वरः ।" अत्र च कामिन्या अतिसुकुमारत्वेन मदनज्वरस्य च अतिदुःसहत्वेन तत्संबन्धस्य संयोगस्याऽयोग्यत्वम् । यथा वा—

क सा कुसुमसाराङ्गी सीता चन्द्रकलोपमा ।
क रक्षःखदिराङ्गारमध्यसंवासवैशसम् ॥

अत्र कुसुमसाराङ्ग्याः सीताया रक्षःखदिराङ्गाराणां च समानाधिकरणसंयोगरूपः संसर्गो न योग्यः । अस्य च बहवो भेदाः संभवन्ति । ते च सर्वेऽपि अननुरूपसंसर्गत्वेन संगृहीता भवन्ति ॥४२॥

अनुरूपसंसर्गः समम् ॥

अत्रापि पूर्ववत् संसर्गो द्विविधः। उत्पत्तिलक्षणः संयोगादिलक्षणश्चेति। अयं च समालंकारो विषमालंकारप्रतिद्वन्द्वी। उदाहरणम्—

पीयूषसिन्धूर्मिसखादुदारात् महाशयात् त्वत्त उदेदुदारा।
कीर्तिच्छटेयं धवलीकृताशा पुण्याऽत्र चित्रं वसुधेन्द्र किं वा ॥

अत्र औदार्यादिगुणविशिष्टप्रकृतनृपरूपात् कारणात् स्वगुणसमानौदार्यादिगुणविशिष्टकीर्तिरूपकार्योत्पत्तिरित्युत्पत्तिलक्षणस्य संबन्धस्याऽनुरूपत्वम्। संयोगादिलक्षणो यथा—"स्वानुरूपं कृतं सद्म हारेण कुचमण्डलम्।" अत्र हारकुचमण्डलयोर्द्वयोरपि मनोहारित्वात् तत्संबन्धस्य संयोगस्याऽनुरूपत्वम्। यथा वा—

युक्तं सभायां खलु मर्कटानां शाखास्तरूणां मृदुलासनानि।
सुभाषितं चीत्कृतिरातिथेयी दन्तैर्नखाग्रैश्च विपाटनानि ॥

अत्र मर्कटानां तरुशाखारूपाऽऽसनादीनां च संयोगादिलक्षणसंबन्धो योग्यः। पूर्वत्र सद्वस्तुयोगः। अत्र तु असद्वस्तुयोगः। अस्य च विषमाऽलंकारप्रतिद्वन्द्वितया बहुधा संभवन्तो भेदा अनुरूपसंसर्गत्वेन संगृहीता भवन्ति ॥ ४३ ॥

इष्टसिद्ध्यर्थमिष्टैषिणा क्रियमाणमिष्टविपरीताचरणं विचित्रम् ॥

विपरीतत्वं च प्रतिकूलत्वम्। उदाहरणम्—

अजरत्वमवाप्तुमेष तावन्मनुजानामधिपो धरातलेऽस्मिन्।
विबुधस्तुतिपात्रकर्मभारात् सुतरां जीर्णतमत्वमादधाति ॥

अत्र अजरत्वरूपेष्टसिद्ध्यर्थं जीर्णतमत्वधारणं क्रियत इति स्पष्टमेवेष्टविपरीताऽऽचरणम्। यथा वा—

बन्धोन्मुक्त्यै खलु मखमुखान् कुर्वते कर्मपाशानन्तःशान्त्यै मुनिशतमताऽनल्पचिन्तां वहन्ति।

तीर्थे मज्जन्त्यशुभजलधेः पारमारोढुकामाः
सर्वं प्रामादिकमिह भवभ्रान्तिभाजां नराणाम् ॥

अत्र यज्ञादिकर्मपाशकरणादिकं वन्धोन्मुक्त्यादिरूपेष्टविपरीतम् । तत्र द्वितीयचरणे शुद्धं विचित्रम् । शान्ता चिन्तायाः स्वरूपत एव विपरीतत्वात् । अन्यत्र तु रूपकाऽनुप्राणितम् । यथा वा—

प्रणमत्युन्नतिहेतोर्जीवनहेतोर्विमुञ्चति प्राणान् ।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ॥

अत्र उन्नत्यादिरूपेष्टविरुद्धं नत्यादिकम् ॥ ४४ ॥

## आधाराधेययोरन्यतरस्याऽतिविस्तृतत्वफलकमितरस्याऽतिन्यूनत्वकल्पनमधिकम् ॥

उदाहरणम्—

को नाम पण्डितवरो वसुधातलेऽस्ति
त्वत्सद्गुणालिमिह वर्णयितुं समर्थः ।
पिण्डीकृतापि ननु या वसुधामरुत्वन्
ब्रह्माण्डभाण्डजठरेऽल्पतमे न माति ॥

अत्र आधारस्य ब्रह्माण्डभाण्डजठरस्याऽतिन्यूनत्वकल्पनेनाऽऽधेयभूतसद्गुणपङ्क्तेरतिविस्तृतत्वं फलितम् । द्वितीयप्रकारो यथा—
" अहो ते हृदयं यत्र शेते काव्योदधिः सुखम् । " अत्र सुखं शेत इत्यनेन कल्पितया काव्योदधिरूपाधेयन्यूनतया हृदयस्याऽऽधारस्याऽतिविस्तृतत्वं पर्यवस्यति ॥ ४५ ॥

## सूक्ष्मत्वेनाऽवगतादाधेयादाधारस्य सूक्ष्मत्वमल्पम् ॥

उदाहरणम्—

काव्यतत्त्वमतिसूक्ष्मभावभागेवमत्र विबुधाः किलाऽब्रुवन् ।
तत्पुनस्तव मतौ महत्तरच्छत्रतां वहति भूमिवल्लभ ॥

अत्र सूक्ष्मत्वेन प्रसिद्धं काव्यतत्त्वरूपमाधेयम् । ततोपि बुद्धिरू-

पाऽऽधारस्य सूच्यग्रवत् सूक्ष्मत्वं काव्यतत्वस्य महत्तरच्छत्रत्वोक्तया प्रदर्शितम् । अयं च जयदेवसंमतः ॥ ४६ ॥

## द्वयोरन्योन्येनाऽन्योन्यस्य विशेषाधानमन्योन्यम् ॥

विशेषश्च क्रियादिरूपः । एवंच द्वयोर्व्यापाराभ्यां परस्परोपकारोऽन्योन्यमिति फलितोर्थः । उदाहरणम्—

क्षितिपते भवतो जितचन्द्रिका श्रयति कीर्तिरहो चरमां दिशम् ।
श्रमततेर्हरणाय भृशं हि साऽप्यथ निजावयवावरणाय ताम् ॥

अत्र दिक्कीर्तिभ्यां द्वाभ्यां परस्परमाश्रयणरूपक्रियाऽऽत्मकविशेषाधानम् । एवं च परस्परमुपकारः स्पष्ट एव । यथा वा—

परपुरुषदृष्टिपातवज्राऽऽहतिभीता हृदयं प्रियस्य सीता ।
अविशत् परकामिनीभुजंगीभयतः सत्वरमेव सोपि तस्याः ॥

अत्र सीतारामाभ्यां परस्परं हृदयप्रवेशरूपविशेषाधानम् ॥४७॥

## वक्ष्यमाणप्रकारत्रयाऽन्यतमः प्रकारो विशेषः ॥

प्रसिद्धमाश्रयं विनाऽऽधेयं वर्ण्यमानमेको विशेषप्रकारः । यच्चैकमाधेयं परिमितयत्किंचिदाधारगतमपि युगपदनेकाधारगततया वर्ण्यते सोऽपरो विशेषप्रकारः । यच्च किंचित्कार्यमारभमाणस्याऽसंभाविताऽशक्यवस्त्वन्तरनिर्वर्तनं स तृतीयो विशेषप्रकारः । तत्रापि प्रथमः प्रकारो द्विविधः । आधारान्तरगतत्वेन वर्ण्यमानमाधेयम्, निराधारत्वेन च । उदाहरणम्—

अहो मनुजदेव ते खलु यशस्त्वदेकाश्रयं
दिशां शिरसि संस्थितं खलमुखानि संकोचयत् ।
त्वमप्यखिलमित्रहृत्स्वथ कवीन्द्रजिह्वाञ्चले
स्थितः स्वगृहमध्यसंस्थितिकृदेव तद्वर्धयन् ॥

अत्र पूर्वार्धे वर्णनीयनृपरूपप्रसिद्धाश्रयं विनैव यशोरूपमाधेयं दिक्शिरोरूपाधारान्तरगतत्वेन वर्णितमिति पूर्वार्धं प्रथमविशेषप्रकारस्योदाहरणम् । निराधारत्वेन वर्ण्यमानमाधेयं यथा—"साधोर्दिवं

गतस्यापि यशो भाति निराश्रयम् । " अत्र निराधारत्वेन वर्ण्यमानं यशोरूपमाधेयम् । यथा वा—

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥

अत्र कविरूपप्रसिद्धाश्रयं विना तद्गिरामाधेयभूतानां निराधारत्वेन वर्णनम् । द्वितीयविशेषप्रकारस्योदाहरणं तु त्वमप्यखिलेत्युत्तरार्धम् । अत्र मत्कृतनृपरूपमेकमाधेयं गृहमध्यरूपपरिमितयत्किंचिदाधारगतमपि मित्रहृदयाद्यनेकाऽऽधारगतत्वेन वर्णितम् । तृतीयविशेषप्रकारस्योदाहरणं यथा—" त्वां प्रसादयता लब्धं कुबेरत्वं धराधिप । " अत्र राजप्रसादनरूपकिंचित्कार्यमारभमाणस्य कुबेरत्वप्राप्तिरूपाऽसंभाविताऽशक्यवस्त्वन्तरनिर्वर्तनम् । यथा वा—

किं नाम तेन न कृतं सुकृतं पुरारे
दासीकृता न खलु का भुवनेषु लक्ष्मीः ।
भोगा न के बुभुजिरे विबुधैरलभ्या
येनार्चितोऽसि करुणाकर हेलयाऽपि ॥

अत्र भगवदर्चनमारभमाणस्य धर्मार्थकामप्राप्तिरूपाऽसंभाविताऽशक्यवस्त्वन्तरनिर्वर्तनम् ॥ ४८ ॥

---

**यत्र ह्येकेन कर्त्रा येन कारणेन कार्यं किंचिन्निष्पादितं निष्पिपादयिषितं वा तदन्येन कर्त्रा तेनैव कारणेन तद्विरुद्धकार्यस्य निष्पादनेन निष्पिपादयिषया वा व्याहन्यते स व्याघातः ॥**

कर्तृत्वं चेह कार्योद्देशेन प्रवर्तमानत्वम् । उदाहरणम्—

संपदा खलजनो यया मुहुर्बाधते गुणवतः सतोऽखिलान् ।
तांस्तयैव सुखयत्यथो भृशं दानकृत् सदय एष भूपतिः ॥

अत्र खलजनेन कर्त्रा संपद्रूपकारणेन निष्पादितं सज्जनबाधनरूपं किंचित्कार्यं तदन्येन मुद्गलदेवेन कर्त्रा तेनैव संपद्रूपकारणेन सज्जन-

चाधनविरुद्धस्य सज्जनसुखकरणरूपकार्यस्य निष्पादनेन वाध्यत इति लक्षणसमन्वयः। अपरो व्याघातो यथा—" दया चेत् वाल इति मय्यपरित्याज्य एव ते।" इयं हि दिग्विजयाय प्रास्थितं राजानं प्रति युवराजस्योक्तिः। दयाऽत्र राज्ये स्थापनरूपा। अपरित्यागश्च सहनयनरूपः। तथा चाऽत्र जैत्रयात्रोन्मुखेन राज्ञा कर्त्रा वालत्वरूपकारणेन युवराजस्य राज्ये एव स्थापनं कार्यं निष्पिपादयिपितं तदन्येन युवराजेन कर्त्रा तेनैव वालत्वरूपकारणेन स्थापनविरुद्धकार्यस्य सहनयनस्य निष्पिपादयिपया व्याहन्यत इति लक्षणाऽनुगमः॥ ४९॥

---

## पङ्क्तिरूपेण निवद्धानामर्थानां पूर्वपूर्वस्योत्तरोत्तरस्मिन्, उत्तरोत्तरस्य वा पूर्वपूर्वस्मिन् संसृष्टत्वं शृंखला॥

इयं च न स्वतन्त्रोऽलंकारः। किंतु वक्ष्यमाणप्रभेदानां कारणमालादीनामनुप्राणिका। संसृष्टत्वं च कार्यकारणभावविशेषणविशेष्यभावादिनानारूपम्।

## सैव शृङ्खला आनुगुण्यस्य कार्यकारणभावरूपत्वे कारणमाला॥

तत्र पूर्वं पूर्वं कारणं परं परं कार्यमित्येका। पूर्वं पूर्वं कार्यं परं परं कारणमित्यपरा। उदाहरणम्—

सत्कर्मणा पुण्यमवाप्यते ततः सच्छ्रीस्तया दानकृतिस्तया पुनः।
कीर्तिस्तयोदारतरं च गौरवं समस्तमेतत् त्वयि संस्थितं नृप॥

अत्र पङ्क्तिरूपेण निवद्धेपु सत्कर्माद्यर्थेपु पूर्वं पूर्वं कारणं परं परं च तत्कार्यमिति कार्यकारणभावरूपं संसृष्टत्वम्। अपरा यथा—

सद्विद्या साधुसङ्गेन साधुसङ्गः सुकर्मणा।
सुकर्म शुद्धमार्गेण शुद्धमार्गः श्रुतीहया॥

अत्र पङ्क्तिरूपेण निवद्धेपु सद्विद्याद्यर्थेपु पूर्वं पूर्वं कार्यं परं परं च तत्कारणम्॥ ५०॥

## सैव शृङ्खला संसर्गस्य विशेष्यविशेषणभावरूपत्वे एकावली ॥

तत्र पूर्वं पूर्वं विशेष्यं परं परं विशेषणमित्येका । पूर्वं पूर्वं विशेषणं परं परं विशेष्यमित्यपरा । तत्र प्रथमभेदे विशेषणस्य स्थापकत्वापोहकत्वोदासीनत्वैस्त्रिविध्यम् । स्थापकत्वं विधायकत्वम् । अपोहकत्वं निषेधकत्वम् । उदासीनत्वं तदुभयशून्यत्वम् । उदाहरणम्—

मैव प्रजा या हि नृपानुरक्ता नृपः स यः प्राज्ञमतावलम्बी ।
प्राज्ञः स यो लोकहितोपदेष्टाऽस्त्येतत्समस्तं तव देव पुर्याम् ॥

अत्र पङ्क्तिरूपेण निबद्धेषु प्रजाद्यर्थेषु पूर्वपूर्वस्य विशेष्यत्वम् उत्तरोत्तरस्य च तद्विशेषणत्वम् । उत्तरोत्तरविशेषणेन च पूर्वपूर्वस्मिन् प्रजादौ विशेष्ये प्रजात्वादिकं विधीयते । विशेषणकोटिप्रविष्टानामपि पदार्थानां प्रत्येकं विशेषणत्वं बोध्यम् । तेन चाऽत्र नृपशब्दार्थस्य पूर्वं प्रति विशेषणत्वं परं प्रति च विशेष्यत्वम् । अपोहकत्वे यथा—

नार्यः स यो न स्वहितं समीक्षते न तद्धितं यत्र परानुतोषणम् ।
न ते परे येन हि साधुताऽऽश्रिता न साधुता सा न हि यत्र माधवः ॥

अत्र उत्तरोत्तरेण वाक्यरूपेण विशेषणेन पूर्वपूर्वस्मिन् विशेष्ये आर्यत्वादिकं निषिध्यते । उदासीनत्वे यथा—

पुराणि यस्यां सवराङ्गनानि वराङ्गना रूपपुरस्कृताङ्गयः ।
रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य ॥

अत्र उत्तरोत्तरेण विशेषणेन पूर्वपूर्वस्मिन् विशेष्ये पुरादौ पुरत्वादिकं न विधीयते न वा निषिध्यते किंतु उदासीनतया स्थीयते । अपरा यथा—" धर्मेण धीर्धिया त्यागस्त्यागेनाऽमृतमश्नुते । "
अत्र धर्माद्यर्थेषु पूर्वपूर्वस्य व्यधिकरणविशेषणत्वमुत्तरोत्तरस्य च तद्विशेष्यत्वम् । यथा वा—

दिक्कालात्मसमैव यस्य विभुता यस्तत्र विद्योतते
यनाऽमुष्य सुधीभवन्ति किरणा राशेः स यासामभूत्

यस्तातिपत्तमुपःसु योऽस्य हविषे यस्तस्य जीवातवे
वोढा यद्गुणमेष मन्मथरिपोस्ताः पान्तु नो मूर्तयः ॥

अत्र क्रमादाकाशसूर्यचन्द्रजलाग्नियजमानपृथ्वीवायवोऽष्टमूर्तयो भगवतः सदाशिवस्य दर्शिताः । पूर्वोदाहरणे हेतुता घटिता । अत्र तु न तथेति विशेषः ॥ ५१ ॥

## सैव शृङ्खला संसर्गस्योत्कृष्टाऽपकृष्टभावरूपत्वे सारः ॥

पूर्वपूर्वोऽपेक्षया उत्तरोत्तरस्य उत्कृष्टत्वमित्येकः प्रकारः । पूर्वपूर्वोऽपेक्षया उत्तरोत्तरस्याऽपकृष्टत्वमित्यपरः प्रकारः । उदाहरणम्—

भूमण्डले भारतवर्षमेतत् तत्रापि रुद्रक्षितिपालवंशः ।
तस्मिन् भवांस्तत्र मतिस्त्वदीयोत्कर्षस्य सीमामगमन्नृपाल ॥

अत्र पङ्क्तिरूपेण निबद्धेषु भूमण्डलाद्यर्थेषु पूर्वपूर्वोऽपेक्षया उत्तरोत्तरस्य उत्कृष्टत्वम् । अपरो यथा—

तृणादपि लघुस्तूलस्तूलादपि च याचकः ।
वायुना किं न नीतोऽसौ मामयं याचयेदिति ॥

अत्र पूर्वार्धे पूर्वपूर्वापेक्षया उत्तरोत्तरस्य लघुत्वादपकृष्टत्वम् ॥ ५२ ॥

## उपदेशक्रमेणाऽर्थानां संबन्धो यथासंख्यम् ॥

प्रथमोपदिष्टार्थस्य प्रथमोपदिष्टार्थेनैव द्वितीयोपदिष्टार्थस्य द्वितीयोपदिष्टार्थेनैवेत्यादिक्रमेण सम्बन्धो यथासंख्यमिति स्पष्टोऽर्थः ।

उदाहरणम्—

मुखरीकरोति धवलीकरोत्यलं
मलिनीकरोति विकचीकरोत्ययम् ।
तव कीर्तिपूर उदितः कवीन् दिशः
कुटिलान् सखीन् मनुजराज सर्वतः ॥

अत्र उत्तरार्धोपदिष्टानां कर्मभूतकव्याद्यर्थानां चतुर्णां पूर्वार्धोपदिष्टाभिर्मुखरीकरोत्यादिक्रियाभिश्चतसृभिः सह क्रमेण सम्बन्धः ।

यथा वा—

द्रुमपङ्कजविद्वांसः सर्वसंतोषपोषकाः ।
मुधैव हन्त हन्यन्ते कुठारहिमदुर्जनैः ॥

अत्र द्रुमः कुठारेण, पङ्कजं हिमेन, विद्वांसो दुर्जनैर्हन्यन्त इति क्रमेणाऽन्वयः । पूर्वत्र असमस्तानामसमस्तैर्यथासंख्यं संबन्धः । इह तु समस्तानां समस्तैरिति विशेषः। वामनस्तु क्रमालंकार इत्यमुं व्यवजहार ॥ ९३ ॥

---

## क्रमेणाऽनेकाधिकरणकमेकमाधेयमेकः पर्यायप्रकारः। क्रमेणाऽनेकाधेयकमेकमधिकरणमपरः पर्यायप्रकारः ॥

उक्तभेदद्वयाऽन्यतरत्वं च पर्यायसामान्यलक्षणम् । उदाहरणम्—

सुधा प्रथममप्सती सुरपुरे ह्युषित्वा ततः
सुखं स्वपिति वाचि ते ननु धरामहेन्द्राऽधुना ।
भवन्तमथ वाक्ततिः कविमुखोद्गताऽऽदौ कृत-
स्थितीन् कृपणभूपतीन् खलु निरस्य धत्ते मुदा ॥

अत्र सुधारूपस्यैकस्याऽधेयस्य क्रमेणाऽप्पतिसुरपुरवाग्रूपाण्यनेकान्यधिकरणानीति पूर्वार्धं प्रथमपर्यायस्योदाहरणम् । द्वितीयपर्यायस्य तु उत्तरार्धमुदाहरणम् । तत्र कविवाक्ततिरूप एकस्मिन्नधिकरणे क्रमेण कृपणभूपतिवर्णनीयनृपरूपाऽनेकाऽऽधेयस्थितिः ॥९४॥

## परकीययत्किंचिद्वस्त्वादानविशिष्टं परस्मै स्वकीययत्किंचिद्वस्तुसमर्पणं परिवृत्तिः ॥

क्रयव्यवहार इति यावत् । स च कविकल्पित एव, न वास्तवः । उदाहरणम्—

यशोऽमृतं स्वं सुमनोजनाय समर्प्य तावद्वसुधामहेन्द्र ।
तदन्तरङ्गाणि ससंमदानि पुनर्ह्रियन्ते भवता समूलम् ॥

अत्र विबुधजनाय यशोऽमृतरूपं स्वकीययत्किंचिद्वस्तु समर्प्य

तदन्तरङ्गरूपपरकीययत्किंचिद्वस्तुन आदानमिति लक्षणाऽनुगमः ।
यथा वा—

किमहं कथयामि योषितामधरं बिम्बफलं समर्प्य याः ।
सुरसानि हरन्ति हन्त हा विदुषां पुण्यफलानि सत्वरम् ॥

अधरबिम्बफलं दत्त्वा पुण्यफलाहरणम् । उभयत्राऽपि कविकल्पितत्वं स्फुटमेव । 'धनं दत्त्वा वस्त्रं क्रीणाति' इत्यादौ कविकल्पितत्वाऽभावेनाऽचमत्कारित्वान्न परिवृत्त्यलंकारः । लक्षणे सामान्यतो विशिष्टमित्युक्तत्वात् दानादानयोः पौर्वापर्यमविच्छिन्नं बोध्यम् । लोकेऽप्येवमेव । इयं च परिवृत्तिः समेन समस्य न्यूनेनोत्तमस्य उत्तमेन न्यूनस्येति त्रिविधेत्याहुः ॥ ९९ ॥

## सामान्यतः प्राप्तस्याऽर्थस्य कस्माच्चिद्विशेषाद्व्यावृत्तिः परिसंख्या ॥

व्यावृत्तिश्च अर्थतः शब्दतो वा । उदाहरणम्—

यशःसुधांशावुदिते त्वदीये धरेन्द्र पूर्णे धवलीकृताशे ।
कोशीभवत्तुण्डसरोजपङ्क्तौ मालिन्यमासीत् खलपुङ्गवानाम् ॥

अत्र खलमुखकमले वस्त्वन्तरे च सामान्यतः प्राप्तस्य मालिन्यस्य 'तुण्डसरोजपङ्क्तावेव मालिन्यमासीन्नाऽन्यत्र' इति वस्त्वन्तरात् व्यावृत्तिरर्थतः प्रतीयते । शब्दतो व्यावृत्तिर्यथा—"स्नेहक्षयः प्रदीपेषु न स्वान्तेषु नतभ्रुवाम् ।" अत्र प्रदीपकामिनीचित्तयोः सामान्यतः प्राप्तस्य स्नेहक्षयस्य कामिनीचित्तात् व्यावृत्तिर्नशब्देन ज्ञायते । स्नेहशब्दः श्लिष्टस्तैलाऽनुरागयोर्वाचकः । इयं च प्रश्नपूर्विकाऽपि संभवति । यथा—

किं तीर्थं हरिपादपद्मभजनं किं रत्नमच्छा मतिः
किं शास्त्रं श्रवणेन यस्य गलति द्वैतान्धकारोदयः
किं मित्रं सततोपकाररसिकं तत्वाऽवबोधः सखे
कः शत्रुर्वद खेददानकुशलो दुर्वासनासंचयः ॥

अत्र हरिपादपद्मभजनादिकमेव तीर्थादिकं नाऽन्यदिति हरिपाद-

पद्मभजनादिभिन्नात् तीर्थत्वादेर्व्यावृत्तिरर्थतः प्रतीयते । प्रश्नपूर्विका शाब्दी व्यावृत्तिर्यथा—

किं भूषणं सुदृढमत्र यशो न रत्नं
किं कार्यमार्यचरितं सुकृतं न दोषः ।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकम् ॥

अत्र यशआदौ रत्नादौ च सामान्यतः प्राप्तस्य भूषणत्वादिकस्य रत्नादिकात् व्यावृत्तिर्नशब्देन बोध्यते । लक्षणे सामान्यत इति पदनिवेशात् पाक्षिकप्राप्तियुगपत्प्राप्त्योरुभयोरपि ग्रहणम् ॥ ५६ ॥

## विरुद्धयोः पाक्षिकी प्राप्तिर्विकल्पः ॥

एकस्मिन् धर्मिणि स्वस्वप्रापकप्रमाणप्राप्तयोरत एव तुल्यबलयोर्विरुद्धयोर्विरुद्धत्वादेव युगपत्प्राप्तेरसंभवात् पाक्षिक्येव प्राप्तिः पर्यवसन्ना । उदाहरणम्—

जित्वा निःशेषमेतन्ननु मनुजपते मेदिनीमण्डलं त्व-
त्कीर्तिः पूरो विशालो द्युतिधवलितदिक्स्वर्गलोकं जिगीषुः ।
गच्छन्नित्थं ब्रवीति प्रथममुडुपतिं संगतं मार्गमध्ये
मां वा वैवस्वतं वा द्युतिलवकणिकोन्मत्त तावद्भजस्व ॥

अत्र भजने जीवनरक्षणमानरक्षणरूपाभ्यां स्वस्वप्रापकप्रमाणाभ्या कर्मतया प्राप्तयोः कीर्तिपूर्ववैवस्वतयोर्विरुद्धत्वेन यौगपद्यासंभवात् पाक्षिकी प्राप्तिः । यथा वा—

प्राणानर्पय सीतां वा गृध्रांस्तर्पय वा द्विजान् ।
यमं भजस्व रामं वा यथेच्छसि तथाऽऽचर ॥

अत्र अर्पणतर्पणभजनेषु मानरक्षणप्रमाणेन यथाक्रमं कर्मतया प्राणगृध्रयमानां, जीवनरक्षणप्रमाणेन च सीताद्विजरामाणां प्राप्तानां यौगपद्यासंभवात् पर्यायेण प्राप्तिः ॥ ५७ ॥

## युगपत्पदार्थानामन्वयः समुच्चयः ॥

पदार्थश्च गुणादिः। युगपदिति क्रमव्यावृत्त्यर्थं, नतु एकक्षणप्रतिपत्त्यर्थम्। तेन किंचित्कालभेदेपि न समुच्चयभङ्गः। अयं च द्विविधः। धर्मिभेदेन धर्म्यैक्येन च। धर्म्यैक्येऽपि द्वैविध्यम्। कारणत्वाऽतिरिक्तसंबन्धेनैकधर्म्यन्वये, कारणतयैकधर्म्यन्वये चेति। उदाहरणम्—

त्वयि दानपरे प्रजाऽनुरक्ता मुदितश्चार्थिजनः खलश्च खिन्नः।
कविवागपि वर्णनप्रसक्ता मनुजेन्द्र प्रसृता च दिक्षु कीर्तिः॥

अत्र अनुरक्तत्वमुदितत्वखिन्नत्ववर्णनप्रसक्तत्वप्रसृतत्वरूपपदार्थानां यथाक्रमं प्रजाऽर्थिखलकविकीर्तिरूपभिन्नधर्मिषु यौगपद्येनाऽन्वयः। "मुखरीकरोति धवलीकरोत्यलं मलिनीकरोति विकचीकरोत्ययम्। तव कीर्तिपूर उदितः" इति पूर्वं यथासंख्यालंकारे उदाहृतं पद्यं कारणत्वाऽतिरिक्तसंबन्धेन एकधर्म्यन्वयस्योदाहरणम्। अत्र च मुखरीकरोत्यादीनां क्रियाणां कीर्तिपूररूपैकधर्म्यन्वयः। कारणतया एकधर्म्यन्वयो यथा– "कुलं रूपं वयो विद्या धनं च मदयन्त्यमुम्।" अत्र कुलादीनां कारणतया मदरूपैकधर्म्यन्वयः। यथा वा—

शरीरं ज्ञानजननं रोगो विष्णुस्मृतिप्रदः।
विपद्वैराग्यजननी त्रयं सुखकरं सताम्॥

अत्र शरीरस्य ज्ञानजनकत्वेन, रोगस्य विष्णुस्मारकत्वेन, विपत्तेश्च वैराग्योत्पादकत्वेन सुखकरत्वमिति शरीरादीनां त्रयाणां कारणतया एकस्मिन् धर्मिणि सुखरूपकार्येऽन्वयः॥ ९८॥

## एककारणजन्यस्य कार्यस्याऽऽकस्मिककारणान्तरसमवधानाऽऽहितसौकर्यं समाधिः॥

अत्र समाधौ हि एकेन कार्ये निष्पाद्यमानेऽप्यन्येनाऽऽकस्मिकमापतता कार्यसौकर्यादिरूपोऽतिशयो यत्र संपाद्यते स विषयः। कारणतयैकधर्म्यन्वयरूपे समुच्चयभेदे तु यत्रैककार्यं संपादयितुं युगपदनेके खले कपोता इवाऽहमहमिकया संपतन्ति। कार्यस्य च

न कोप्यतिशयः स इति परस्परं भेदः। सौकर्यं तावत् कार्यस्याऽनायासेन सिद्धया साङ्गसिद्धया च। उदाहरणम्—

आयातोऽयं खलु नरपते शुक्लपक्षो मदीयं
बिम्बं नीलाञ्जनसममिदं रञ्जयेत् कान्तिपूरैः।
इत्थं यावन्मनसि कुरुते चन्द्रमास्तत्र तावत्
त्वत्कीर्त्योघः सकलहरितो द्योतयन्नाविरासीत्॥

अत्र शुक्लपक्षरूपकारणसांनिध्यादपि सिद्ध्यतश्चन्द्रबिम्बरञ्जनस्य कार्यस्याऽऽकस्मिककीर्तिपूररूपकारणान्तरसमवधानादनायासेन सिद्धिः। शुक्लपक्षे हि चन्द्रबिम्बं कान्तिपूर्णं भवतीति सकलानुभवसिद्धमेव। साङ्गसिद्धिर्यथा—

नवप्रसङ्गं दयितस्य लोभादङ्गीकरोति स्म यदा नताङ्गी।
श्लथं तदालिङ्गनमप्यकस्मात् घनो निनादैर्घनतां निनाय॥

अत्र दयितलोभरूपकारणजन्यस्य आलिङ्गनरूपकार्यस्य आकस्मिकघनगर्जितरूपकारणान्तरेण गाढत्वसंपादनात् साङ्गतासिद्धिः॥ ५९॥

---

## प्रतिपक्षसम्बन्धिनस्तिरस्कृतिः प्रत्यनीकम्॥

लोके हि प्रतिपक्षतिरस्कारे असमर्थश्चेत् तत्संबन्धिनं कंचित् तिरस्करोति। तद्वदेवेहापि। तेन चाऽत्र प्रतिपक्षस्य बलवत्त्वम्, तिरस्कर्तुश्च दुर्बलत्वं गम्यते। संबन्धश्चाऽनेकविधः। उदाहरणम्—

इन्दो जितस्त्वं क्षितिपस्य कीर्त्या तदाश्रितेष्वत्र सरोरुहाणि।
विमर्दयस्यायतनेजपादैर्न तावता कीर्तिविजेहता ते॥

अत्र प्रतिपक्षभूतकीर्तेः संबन्धिनां कमलानां तिरस्कारश्चन्द्रकर्तृकः। कमलानां कीर्तिदास्येच्छाश्रयत्वात् कीर्तिरूपप्रतिपक्षसंबन्धित्वम्। यथा वा—

रे रे मनो मम मनोभवशासनस्य
पादाम्बुजद्वयमनारतमामनन्तम्।

किं मां निपातयसि संसृतिगर्तमध्ये
नैतावता तव गमिष्यति पुत्रशोकः ॥

अत्र मनोभवारिरूपप्रतिपक्षसंबन्धिनो भक्तस्य मम संसारगर्तपातरूपस्तिरस्कारो मनःकर्तृकः ॥ ६० ॥

## भूतस्य भविष्यतो वाऽर्थस्य प्रत्यक्षत्वेन वर्णनं भाविकम् ॥

कवेर्भावो भूतभविष्यतोरप्यर्थयोर्लौकिकप्रत्यक्षविषयत्वेन प्रतिपादनेच्छाऽत्रास्तीति भाविकम् । उदाहरणम्—

आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसंभारां साक्षात्कुर्वे तवाऽऽकृतिम् ॥

अत्र तच्छब्दार्थकेन इतिशब्देनाऽञ्जनस्य परामर्शः । तथा च पूर्वार्धे तवास्मिन् लोचने यदञ्जनमासीत् तत्पश्यामीत्युक्त्या भूतस्याऽञ्जनरूपस्याऽर्थस्य वर्तमानकाले प्रत्यक्षत्वेन वर्णनम् । उत्तरार्धे तु भाविभूषणसंभारां भविष्यद्भूषणसंभारविशिष्टां तवाकृतिं साक्षात्कुर्वे इत्युक्त्या भविष्यतो भूषणसंभाररूपस्याऽर्थस्य वर्तमानकाले प्रत्यक्षत्वेन वर्णनम् । भूतत्वभविष्यत्वबोधकशब्दाऽनुपादानेऽपि भाविकं संभवति । यथा—" अहं विलोकये साक्षाद्युध्यन्तेऽत्र सुराऽसुराः ।" अत्र भूतस्य सुराऽसुरयुद्धस्य प्रत्यक्षत्वेन वर्णने न कोऽपि भूतत्वबोधकः शब्द उपात्तः । एवं भविष्यत्वबोधकशब्दानुपादानेऽप्यूहनीयम् । अथ वर्तमानकाले भूताऽर्थस्य भविष्यदर्थस्य वा संबन्धाऽभावेऽपि तत्संबन्धवर्णनात् असंबन्धे संबन्धातिशयोक्तया गतार्थोयमिति वदन्ति । अन्ये तु न तया गतार्थोयं किंतु साऽस्याऽनुप्राणिकेति ॥ ६१ ॥

## कस्यचिदर्थस्य कैमुतिकन्यायेन सिद्धिरर्थापत्तिः ॥

इयमेवाऽऽलंकारिकनये अलंकारत्वेन काव्ये प्रसिद्धा । अत एवेयं काव्यार्थापत्तिशब्देनाऽपि व्यवह्रियते । उदाहरणम्—

अहं हि जेता सरसीरुहामित्यखर्वगर्वं दधतं मृगाङ्कम् ।
त्वत्कीर्तिपूरोऽभ्यभवन्महिम्ना निजेन तेषां गणना पुनः का ॥

अत्र पद्मजेता चन्द्रोपि येनाऽभिभूतस्तेन पद्मान्यभिभूतानीति किमु वक्तव्यमिति पद्मजयरूपस्यार्थस्य कैमुत्येन सिद्धिरिति प्राचीनाः । नव्यास्तु—

नवाऽग्रे यदि दारिद्र्यं स्थितं भूप द्विजन्मनाम् ।
शनैः भवितुरप्यग्रे तमः स्याम्यत्यसंशयम् ॥

इत्यादौ कैमुतिकन्यायेन सूर्योऽग्रे तमोवस्थानरूपस्याऽर्थस्याऽसिद्धिरिति प्राचीनलक्षणोपर्यव्याप्तिदोषमुद्भाव्य 'केनचिदर्थेन तुल्यन्यायत्वादर्थान्तरस्यापत्तिरर्थापत्तिः ॥' इति लक्षणान्तरं निर्मिमते । ततश्च तवाग्रे यदीत्युदाहरणे शनैःशब्दमहिम्ना राजाग्रे दारिद्र्यस्थित्यपेक्षया सूर्याग्रे तमोवस्थानं दुःशकमेवेत्यवगतमपि न्यायसाम्यादापाद्यते, न तु कैमुतिकन्यायेनेति नाऽव्याप्तिशङ्कापि नव्यलक्षणोपरि । अहं हि जेतेत्यादौ तु कैमुतिकन्यायतामात्रं नार्थापत्तिरिति तदाशयः । प्राचीनाऽनुयायिनां मते तु तवाग्रे यदीत्यादिपद्यं वक्ष्यमाणसंभावनाद्यलंकारोदाहरणम् नत्वर्थापत्तेरिति प्राचीनानामर्थापत्तिलक्षणं निर्दुष्टमेव । यथा वा—

उदुम्बरफलानीव ब्रह्माण्डान्यत्ति यः सदा ।
सर्वगर्वापहः कालस्तस्य के मशका वयम् ॥

अत्र यः सर्वब्रह्माण्डानामत्ता सोऽस्माकमप्यत्तेति किमु वक्तव्यमित्यस्माकमदनरूपोऽर्थः कैमुतिकन्यायेन सिद्धः ॥ ६२ ॥

---

**अनुमितिकरणत्वेन सामान्यविशेषभावाभ्यां चाऽनालिङ्गितः प्रकृतार्थोपपादकत्वेन विवक्षितोऽर्थः काव्यलिङ्गम् ॥**

उपपादकत्वं च तन्निश्चयजनकज्ञानविषयत्वम् । अनुमानाऽर्थान्तरन्यासयोर्वारणायाऽनालिङ्गितान्तम् । गम्यमानेहेतुत्वकस्यैव हेतोः

सुन्दरत्वेनाऽऽलंकारिकैः काव्यलिङ्गताऽभ्युपगमात् ' भयानकत्वात् परिवर्जनीयः ' इत्यादौ पञ्चम्यादिशब्दप्रतिपादितहेतुत्वकस्य हेतोर्वारणाय उपपादकत्वेन विवक्षित इति । उदाहरणम्—

पूर्णस्त्वदीयो नृप कीर्तिचन्द्रः सदुत्तमश्लाघ्य इदं समस्तम् ।
भूमण्डलं धिक्कृतसर्वबाधो दिवानिशं ह्लादयते नितान्तम् ॥

अत्र चन्द्रस्य अस्ताद्यनेकबाधाविशिष्टत्वात् तत्कर्तृकं निखिलभूमण्डलाऽऽह्लादनमविच्छिन्नमापाततोऽघटमानमिति तन्निश्चयाय धिक्कृतसर्वबाध इति पदार्थो हेतुत्वेन विवक्षितः । वाक्यार्थस्य हेतुत्वं यथा—" जितोऽसि मन्द कन्दर्प मच्चित्तेऽस्ति त्रिलोचनः । " अत्र कन्दर्पजय आपाततोऽघटमान इति तन्निश्चायकत्वेन ' मच्चित्तेऽस्ति त्रिलोचनः ' इति वाक्यार्थो विवक्षितः । यथा वा—

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे नैवाहं क्वचिदपि भवन्तं प्रणतवान् ।
नमन् मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिमान्
महेश क्षन्तव्यं तदिदमपराधद्वयमपि ॥

अत्र पुरा क्वचिदपि नाऽहं भवन्तं प्रणतवान् , अग्रेऽप्यहमनतिमानिति द्वयोर्वाक्ययोरर्थोऽनमनं दुरितरूपाऽपराधद्वये हेतुः । तच्छब्दस्याऽत्र बुद्धिस्थपरामर्शकतया दुरितबोधकत्वम् । परिकरे हि पदार्थवाक्यार्थबलात् प्रतीयमानार्थौ वाच्योपस्कारतां भजतः । अत्र काव्यलिङ्गे तु पदार्थवाक्यार्थावेव हेतुभावं भजत इति भेदः ॥ ६३ ॥

## अनुमितिरनुमानम् ॥

अनुमानमित्यत्र भावे ल्युट् । उदाहरणम्—

खलाननाब्जानि निमीलितानि ससंभ्रमं प्राज्ञचकोरवृन्दम् ।
इतस्ततः संचरदुन्मुखं च त्वत्कीर्तिचन्द्रोदयमाश्रुवन्ति ॥

अत्र वचनं स्फुटबोधः । स चाऽनुमित्यात्मकः । तथा चाऽत्र खलाननाब्जनिमीलनरूपस्य प्राज्ञचकोरवृन्दकर्तृकसंभ्रमपूर्वकोन्मुख-

संचरणरूपस्य च लिङ्गस्य साध्यव्याप्यत्वेन निश्चयात् कारणात् कीर्तिचन्द्रोदयरूपसाध्यस्यानुमितिरुत्पद्यते। इदं च रूपकानुप्राणितम् । शुद्धं यथा—

निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः ।
विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः ॥

अत्र मालतीविकासादिना लिङ्गेन सूर्यास्तस्य साध्यस्यानुमितिः । यथा वा—

प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधि-
र्निरुत्सेको लक्ष्म्यामनभिभवगन्धाः परकथाः ।
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः
श्रुतेऽत्यन्तासक्तिः पुरुषमभिजातं कथयति ॥

अत्र प्रच्छन्नप्रदानादिना लिङ्गेन कुलीनत्वरूपसाध्यव्याप्येन कुलीनत्वस्य साध्यस्यानुमितिः । यद्यप्यत्र प्रच्छन्नप्रदानादीनां पदार्थानां कारणतया एकस्मिन् धर्मिणि बोधरूपकार्येऽन्वयात् कारणतयैकधर्म्यन्वयरूपः समुच्चयः संभवति, तथापि तदुत्तरं जायमानमनुमानं न निःसारयितुं शक्यते। सुन्दरपदमनुवर्तत एव । तेन 'वह्निमान् धूमात्' इत्यादौ वह्निविषयकानुमितेर्नालंकारत्वम्। अथ अनुमानात् काव्यलिङ्गस्य को विशेष इति चेत् कविनिबद्धप्रमात्रन्तरनिष्ठा ह्यनुमितिरनुमानालंकृतिं प्रयोजयति । श्रोतृनिष्ठा महावाक्यार्थनिश्चयानुकूला तु काव्यलिङ्गमिति महान्विशेषः ॥६४॥

---

**सामान्येन विशेषस्य विशेषेण सामान्यस्य वा यत्समर्थनं तदर्थान्तरन्यासः ॥**

समर्थनं नाम इदमेवमनेवं वा स्यादिति संशयोत्पत्तिप्रतिबन्धक इदमित्थमेवेति निश्चयः । तच समर्थनं साधर्म्यवैधर्म्याभ्यां द्विविधम् । उदाहरणम्—

मात्सर्यमुत्सार्य परस्परं त्वं क्षितीन्द्र लक्ष्मी च सरस्वतीं च ।
स्वस्मिन्नकार्षीरनुरागवत्यौ तेजस्विनः संघटयन्ति किं न ॥

अत्र लक्ष्मीसरस्वत्योः परस्परमत्सरदूरीकरणपूर्वकं स्वस्मिन्ननुरागसंपादनं प्रकृतो विशेषश्चतुर्थचरणनिबद्धेन सामान्येनाऽप्रकृतेन समर्थितः । यथा वा मदीयदत्तकारुण्यलहर्याम्—

भक्ताश्वनाय विनतार्तिहराऽनुकम्पा-
देवीवशत्वमगमज्जगतामधीशः ।
स्वातन्त्र्यशाल्यपि भवान् हि परोपकृत्यै
संपद्यतेऽपि लघुता महता गुणाय ॥

पूर्वोदाहरणे हि यत् यतः इत्याद्यन्यतमस्य प्रतिपादकशब्दस्याऽनुपादानादार्थः समर्थ्यसमर्थकभावः । इह तु हिशब्दोपादानात् शाब्दः । सामान्यस्य विशेषेण यथा—

गुणवद्वस्तुसंसर्गाद्याति स्वल्पोऽपि गौरवम् ।
पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्यते ॥

अत्र पूर्वार्धोपात्तसामान्यस्य प्रकृतस्य उत्तरार्धोपात्तेन विशेषेणाऽप्रकृतेन समर्थनम् । सर्वमिदं साधर्म्येणोदाहृतम् । वैधर्म्येण समर्थनं यथा—

गुणानामेव दौरात्म्यात् धुरि धुर्यो नियुज्यते ।
असंजातकिणस्कन्धः सुखं स्वपिति गौर्गलिः ॥

अत्र पूर्वार्धगतसामान्यस्य प्रकृतस्य उत्तरार्धगतविशेषेणाऽप्रकृतेन समर्थनम् । वैधर्म्यं तावत् स्फुटमेव । वृषवृत्तान्तस्य प्रकृतत्वे तु अनयोरेव पूर्वार्धोत्तरार्धयोर्व्यत्यासे कृते सति अत्रैव पद्ये विशेषस्य सामान्येन समर्थनं वैधर्म्येण संभवति ॥ ६९ ॥

**कस्यचिद्विशेषस्य समर्थकत्वेनोपात्तस्य सामान्यस्य विशेषान्तरेण, कस्यचित्सामान्यस्य समर्थकत्वेनोपात्तस्य विशेषस्य सामान्यान्तरेण वा यत्समर्थनं स विकस्वरः ॥**

अत्र च शृङ्खलाकृतचमत्कारोदय इति पूर्वस्माद्विशेषः । उदाहरणम्—

यशःशरीरं तरुणं बिभर्ति प्रेम्णा नितान्तं क्षितिपाल एषः ।
सद्वस्तुमात्रादरिणो बुधा हि धत्ते हरोऽब्जं शिरसा विषं नो ॥

अत्र पूर्वार्धनिबद्धस्य विशेषस्य समर्थनायोपात्तस्य तृतीयचरणगतसामान्यस्य चतुर्थचरणगतेन विशेषान्तरेण समर्थनमिति प्रथमपक्षस्येदमुदाहरणम् । पक्षान्तरस्य यथा—

महतां किमपि न दुष्करमेको रामो हि राक्षसानमितान् ।
अवधीदर्धक्षणतः किं नो घटते समागते समये ॥

अत्र प्रथमं सामान्यमुपन्यस्य तत्समर्थकत्वेनोपात्तो विशेषः सामान्यान्तरेण समर्थितः । इदं च पक्षान्तरमाधुनिकसंमतम् ॥६६॥

---

**कस्मिंश्चिदर्थे किंचिद्धर्मकृताऽतिशयप्रतिपिपादयिषया प्रसिद्धतद्धर्मवता संसर्गस्योद्भावनं प्रौढोक्तिः ॥**

संसर्गस्य चाऽनेकविधत्वम् । उदाहरणम्—

अमरनिर्झरिणीह्रदपङ्कजाऽऽकरमिता तव कीर्तिरियं किल ।
निखिललोकमनांसि पुनः पुनर्हरति तावदहो क्षितिशासन ॥

अत्र कमलाकररूपेऽर्थे धवलताकृताऽतिशयस्य प्रतिपादनेच्छया धवलत्वाऽधिकरणीभूतभागीरथीह्रदसंबन्ध उद्भावितः । यथा वा—

वल्मीकोदरसंभूतकपिकच्छूसहोदराः ।
हा पीडयित्वा निघ्नन्ति सज्जनान् दुष्टदृष्टयः ॥

दुर्जनेषु तावत् कपिकच्छूसहोदरत्वेन मारकत्वं न प्राप्नोति, किंतु पीडाजनकत्वमात्रम् । कविस्तु पीडां जनयित्वा मारयन्तीत्येवंरूपोऽतिशयः प्रतिपिपादयिषितः । अतो वल्मीकोदरसंभृतत्वं सर्पाधिकरणवृत्तित्वरूपं वृश्चिकाविशेषणं कविना कल्पितम् । ततश्चाऽत्र कस्मिंश्चिदर्थे दुर्जनेषु दुष्टत्वरूपकिंचिद्धर्मकृतो यः पीडां जनयित्वा मारयन्तीत्येवंरूपोऽतिशयस्तत्प्रतिपिपादयिषया प्रसिद्धतद्धर्मवता

वल्मीकोदरसंभृतवृश्चिकेन सहोदरत्वरूपसंबन्धस्योद्भावनमिति लक्षणसमन्वयः। पूर्वोदाहरणे वास्तवः संवन्धः। इहतु कल्पितः ॥६७॥

## किंचिदर्थसाधकस्याऽर्थान्तरस्योहः संभावना ॥

किंचिदर्थश्च क्वचित् प्रकृतः क्वचिदप्रकृतः। साधकत्वं च प्रयोजकत्वाऽऽपादकत्वाऽन्यतररूपम्। ऊहस्तर्कः। स च 'यदीत्थं स्यात्, एवं भवति चेत्' इत्याद्यर्थकः। तेन पदान्तरघटितस्याऽपि संग्रहः।

उदाहरणम्—

सृष्ट्वा सहस्रवदनान् शतशो विधाता
वक्तुं त्वदुत्तमगुणान् विनियोजयेच्चेत्।
विश्वंभरेन्द्र निखिला अपि ते भवेयु-
रुक्तास्तदेति कवयः कथयन्ति तावत् ॥

अत्र प्रकृतवर्ण्यसंबन्धिनिखिलगुणोक्तिरूपस्य किंचिदर्थस्य प्रकृतस्य प्रयोजकोऽनेकशेषसृष्टिपूर्वकं तेषां गुणोक्तौ नियोगस्तर्कितः।

यथा वा—

कस्तूरिकामृगाणामण्डाद्गन्धगुणमखिलमादाय।
यदि पुनरहं विधिः स्यां खलजिह्वायां निवेशयिष्यामि ॥

अत्र खलजिह्वाया निखिलगन्धगुणनिवेशनरूपस्य किंचिदर्थस्य प्रकृतस्य प्रयोजकः स्वविधीभवनरूपोऽर्थ ऊहितः। इदं च पद्यद्वयं प्रयोजकत्वे उदाहृतम्। आपादकत्वे यथा—

तवाऽग्रे यदि दारिद्र्यं स्थितं भूप द्विजन्मनाम्।
शनैः सवितुरप्यग्रे तमः स्थास्यत्यसंशयम् ॥

अत्र सूर्याग्रे तमोवस्थानरूपस्य किंचिदर्थस्याऽप्रकृतस्य आपादको राजाग्रे दारिद्र्याऽवस्थानरूपोऽर्थ ऊहितः। यथा वा—

हठादाकृष्टानां कतिपयपदानां रचयिता
जनः स्पर्धालुश्चेदहह कविना वश्यवचसा।
भवेदद्य श्वो वा किमिह बहुना पापिनि कलौ
घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः ॥

अत्र कुलालस्य विधात्रा सह कलहरूपस्य किंचिदर्थस्याप्रकृतस्य आपादकः क्षुद्रकवेर्महाकविना सह स्पर्धारूपोऽर्थ ऊहितः। प्रथमे द्वितीये चोदाहरणेऽर्थान्तरे सिद्धे सति तेन किंचिदर्थः सेद्धुं समर्थः। तृतीये चतुर्थे चोदाहरणेऽर्थान्तरे सिद्धे सत्यपि न तेन किंचिदर्थः सेद्धुं समर्थः। सूर्याग्रे नभोवस्थानस्य, ब्रह्मणा सह कुलालकलहस्य च अत्यन्तमसंभावितत्वात्। किंतु येन न्यायेन अर्थान्तरं सिद्धं तेनैव न्यायेन किंचिदर्थोऽपि सेद्धुमर्हतीत्यापादनयोग्यः। द्वयोरर्थयोस्तुल्यन्यायत्वात्। एतदभिप्रेत्यैव 'साधकत्वं च प्रयोजकत्वाऽऽपादकत्वाऽन्यतररूपमित्युक्तमुपरिष्टात्। एवमादिविस्तरस्तु स्वयमूहनीयः। अनुवर्तमानं सुन्दरपदं च न विस्मरणीयम्। न्यायः कारणम्। इयमेव यथार्थातिशयोक्तिरित्यन्यत्र ॥ ६८ ॥

---

## कस्मिंश्चिदर्थे मिथ्यात्वसिद्ध्यर्थं मिथ्याऽर्थान्तरसंबन्धकल्पनं मिथ्याध्यवसितिः ॥

संबन्धश्चाऽनेकविधः। उदाहरणम्—

> विद्वांसो विजिताऽमरेन्द्रगुरुकाः सत्संसदि प्रेमतः
> कीर्तिं ते जितचान्द्रिकां विगतदृङ्लेशा अहो चक्षते।
> पृथ्वीनाथ महाऽपकीर्तिनिवहं वन्ध्यासुतास्तावकं
> मूकाः माधमयीं वदन्ति बधिरास्थान्यां नितान्तं मदा ॥

अत्रोत्तरार्धे दुष्कीर्तिरूपेऽर्थे मिथ्यात्वसिद्धये बधिरत्वभाधिकरणकमूकवन्ध्यापुत्रकर्तृकाऽऽभाषणरूपामिथ्याभूताऽर्थान्तरसंबन्धस्य कल्पनम्। असंबन्धे संबन्धरूपाऽतिशयोक्तितो मिथ्याध्यवसितेः किंचिन्मिथ्यात्वसिद्ध्यर्थकमिथ्याऽर्थान्तरकल्पनसयुक्तविच्छित्तिविशेषेण भेद इत्यन्ये। अथ प्रौढोक्तावेवाऽस्या अन्तर्भाव इत्येके। अस्यां मिथ्याऽर्थान्तरकल्पनकृतचमत्कारोदय इति प्रौढोक्तितो विशेषात् पृथगलंकारतासिद्धिरित्यपरे ॥ ६९ ॥

---

**प्रकृतधर्मिणि प्रकृतव्यवहाराऽनुल्लेखेन निरूप्यमाणोऽप्रकृतव्यवहारसंबन्धो ललितम् ॥**

उदाहरणम्--

विश्वामितोपकृदयं नृपतिः क तावन्नैजोदरार्चनपरः क धरेन्द्रवर्गः।
खद्योतसंसदि महस्रमयूखमेष मूर्खो जनः खलु निवेशयितुं प्रवृत्तः॥

अत्र प्रकृतधर्मिणि मूर्खजने क्षुद्रबुद्धिषु राजसु उदारस्य वर्णनीयनृपस्य गणनामिच्छन्नित्येवं प्रकृतव्यवहारं विषयं कण्ठतोऽनुक्त्वैव खद्योतसभाधिकरणकसूर्यकर्मकनिवेशनाऽनुकूलप्रवृत्तिरूपस्याऽप्रकृतव्यवहारस्य विषयिणः संबन्धो निरूपितः। यथा वा--" नितरां निर्गते नीरे सेतुमेषा चिकीर्षति । " इयं च सख्याः स्वनायकानयनार्थं प्रेषयितुकामां नायिकामुद्दिश्योक्तिः । अत्र प्रकृतधर्मिणि नायिकाया यथाकथंचित्समागतमाये तत्कालोपेक्षणात् प्रतिनिवृत्तं नायिकान्तरासक्तं नायकमानिनीपन्तीत्येवं प्रकृतव्यवहारमनुक्त्वैव समागतजलनिर्गमनोत्तरं तत्स्तम्भनार्थं सेतुचिकीर्षारूपोऽप्रकृतव्यवहार उपात्तः। पूर्वोदाहरणे पूर्वार्धोपनिबद्धविषमालंकारेणाऽप्रकृतव्यवहारेण च प्रकृतव्यवहारस्य गम्यता। द्वितीयोदाहरणे तु अप्रकृतव्यवहारमात्रेण प्रकृतव्यवहारस्य गम्यता। अथ अभेदातिशयोक्तौ हि पदार्थेन पदार्थस्यैवाऽभेदाध्यवसानं दृष्टं नतु व्यवहारेण व्यवहारस्येति नेदं तत्रान्तर्भवति । नापि सादृश्यमूलायामप्रस्तुतप्रशंसायाम् । धर्म्यंशे अप्रस्तुतत्वविरहात् । नापि निदर्शनायाम् । एकधर्मिगतव्यवहारद्वयस्य कण्ठत उपादाने एव तस्या इष्टेः । अन्ये तु आर्थी निदर्शनैवेयमिति वदन्ति ॥ ७० ॥

---

**साक्षात्तदुद्देश्यकयत्नमन्तरेणाप्यभीष्टार्थलाभः प्रहर्षणम् ॥**

तच्च त्रिविधम् । तत्र अकस्मादभीप्सितार्थलाभ इत्येका विधा ।

वाञ्छितार्थसिद्ध्यर्थं यत्ने क्रियमाणे ततोऽप्यधिकतरार्थलाभ इति द्वितीया । फलोपायसिद्ध्यर्थाद्यत्नात् साक्षात् फलस्य लाभ इति तृतीया । उदाहरणम्—

स्वकुलभरणकर्ता नाऽधुना कश्चनाऽस्ति
क्षितिप इति विरक्त्या स्तब्धभूतः कवीन्द्रः ।
अवनिविततकीर्तौ श्रीसरस्वत्युपेतो
भुवि किल सहसा त्वं तादृशः प्राप्यसे स्म ॥

अत्र भरणकर्तृरूपस्याऽभीष्टार्थस्य यत्नं विनैवाऽकस्माल्लाभः यथा वा—

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमै-
र्नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय ।
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलयः ॥

अत्र राधामाधवयोरैकान्तक्रीडारूपोऽर्थोऽभीप्सित इति प्रसिद्धमेव । तस्य च यत्नं विनैव अकस्माल्लाभ इति प्रथमप्रकारस्येदमुदाहरणद्वयम् । द्वितीया त्रिधा यथा—" दीपमुद्योजयेद्यावत्तावदभ्युदितो रविः । " स्पष्टम् । तृतीया यथा—"निध्यञ्जनौषधीमूलं खनता साधितो निधिः । " अत्र निध्यञ्जनसिद्ध्यर्थं मूलिकां खनतस्तत्रैव साक्षान्निधिरूपफलस्य लाभः ॥ ७१ ॥

---

## अभीष्टार्थविरुद्धलाभो विषादनम् ।

अस्य च अभीष्टार्थलाभार्थं कारणप्रयोगो यत्र न कृतः केवलमिच्छैव कृता जातश्च विरुद्धार्थलाभः सः, यत्र च इष्टार्थे प्रयुक्तेऽपि कारणे तस्मान्न विरुद्धार्थलाभः किंतु स्वकारणवशात् स च विविक्तो विषयः । उदाहरणम्—

गेहं प्रविश्याथ भयं प्रदर्श्य कवीन् विदध्यां खलु कान्दिशीकान् ।
नःस्यांगणे चिन्तयतीति भूप कटाक्षताक्ष्यैः समुपस्थितस्ते ॥

अत्र नःस्थ्योरगस्य गृहप्रवेशपूर्वकमयप्रदर्शनेन कविकान्दिशीकरणमिच्छारूपममीष्टोऽर्थस्तद्विरुद्धोऽर्थश्च कटाक्षतादर्यसमुपस्थानरूपस्तस्य लाभः । यथा वा—

गमिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोशगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार ॥

अत्र कमलकुड्मलात् स्वमुक्त्यर्थं कमलविकास इच्छारूपो भ्रमरस्याऽभीष्टोऽर्थस्तद्विरुद्धोऽर्थश्च गजकर्तृकं कमलिन्या उद्धरणं तस्य लाभः । पूर्वोदाहरणे रूपकाऽनुप्राणितं विषादनम् । इह तु शुद्धम् । विषादान्तरोदाहरणं यथा—

वेलाभङ्गाऽऽननशीतरश्मि गम्भीरवर्तीनां हरिदश्वगीणाम् ।
गोपाङ्गनाना स्मरजातकम्पादखण्डसंपातमियाय नीवी ॥

अत्र अभीष्टार्थस्याऽऽननगोपनस्य विरुद्धोऽर्थो नीवीस्खलनम् । कारणीभूतत्रपाभङ्गजातपरिपन्थित्वात् । तत्र सात्त्विककम्पस्यैव स्वकारणादुत्पन्नत्वं नतु आननगोपनाऽनुकूलयत्नात् । आननगोपनरूपस्याऽभीष्टार्थस्य तदनुकूलयत्नादुत्पत्तिरप्यत्राऽस्त्येव ॥ ७२ ॥

---

अन्यदीयगुणदोषप्रयुक्तमन्यस्य गुणदोषयोराधानमुल्लासः ॥

तु नृपगतौदार्येण गुणेन कविकुलस्योल्लासो गुण इति तत् गुणेन गुणस्याऽऽधाने उदाहरणम् । यथा वा—

भूषितानि हरेर्भक्तैर्दूषितानि पराङ्मुखैः ।
स्वकुलं नगरं देशो द्वीपं सर्वा च मेदिनी ॥

अत्र हरिभक्तगुणप्रयुक्तस्तत्कुलादीनां गुणः । हरिपराङ्मुखदोषप्रयुक्तस्तत्कुलादीनां दोषश्च । अत्र च उत्तरोत्तरव्यापकतेति पूर्वस्माद्विशेषः । गुणेन दोषाधानं यथा—

दानार्थिनो मधुकरा यदि कर्णतालै-
र्दूरीकृताः करिवरेण मदान्धबुद्ध्या ।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥

अत्र भ्रमराणामलंकरणत्वरूपगुणेन गजस्य तत्प्रतिक्षेपरूपो दोषः । दोषेण गुणाऽऽधानं यथा—

आघ्रातं परिचुम्बितं परिमुहुर्लीढं पुनश्चर्वितं
त्यक्तं वा भुवि नीरसेन मनसा तत्र व्यथां मा कृथाः ।
हे सद्रत्न तवैतदेव कुशलं यद्वानरेणाऽऽदरा-
दन्तःसारविलोकनव्यसनिना चूर्णीकृतं नाऽश्मना ॥

अत्र वानरस्य चापलरूपदोषेण रत्नस्य चूर्णनाऽभावो गुणः । गुणादिश्च क्वचित् व्यङ्ग्यः क्वचित् वाच्यः । केचित्तु काव्यलिङ्गेनाऽस्यं गतार्थ इत्याहुः ॥ ७३ ॥

---

अन्यस्याऽन्यदीयगुणदोषप्रयुक्तगुणदोषाधानाऽभावोऽवज्ञा ॥

अयं च उल्लासविपर्ययभूतः । उदाहरणम्—

यशोऽमृताऽऽस्वादनतः खलेन्द्रकुलं न संतोषमहो प्रयाति ।
एतावता का खलु तस्य हानिराचक्ष्व वा ते मनुजाधिनाथ ॥

अत्र यशोमृतगतस्वादिमगुणप्रयुक्तस्य खले संतोषरूपगुणाधान-

स्याऽभावः । अर्थतः सिद्धेन च खलगतमात्सर्यरूपदोषेण यशोमृतादौ दोषाधानस्याऽभावः । यथा वा—

मद्वाणि मा कुरु विषादमनादरेण
मात्सर्यमन्दमनसां सहसा खलानाम् ।
काव्यारविन्दमकरन्दमधुव्रताना-
मास्येषु यास्यति सतां विपुलं विलासम् ॥

अत्र पूर्वार्धे अनादररूपखलदोषप्रयुक्तस्य कविवाण्यां विषादरूपदोषस्य माशब्देन निषिध्यमानतया अप्रतिष्ठानादभावः शाब्दः । वाणीगतरमणीयतारूपगुणप्रयुक्तस्य खले संतोषरूपगुणाधानस्याऽभावस्त्वार्थ इत्युभयविधाप्यवज्ञा । उत्तरार्धे तु सहृदयानां सरसतारूपगुणेन वाण्या उल्लासरूपगुणाधानात् तदुल्लासोदाहरणम् । इयं चाऽवज्ञा कारणे सति कार्याऽनुत्पत्तिरूपया विशेषोक्त्या गतार्थेति वदन्ति ॥ ७४ ॥

---

## उत्कटगुणविशेषलालसया दोषत्वेन प्रसिद्धस्याऽपि वस्तुनः प्रार्थनमनुज्ञा ॥

उदाहरणम्—

सेवकत्वमपि संनिधौ जनाः प्रार्थयन्ति बहुधाऽस्य भूभृतः ।
यत्र तन्निखिलसद्गुणामृतस्वादिमा समनुभूयतेतराम् ॥

अत्र प्रकृतनृपगतनिखिलसद्गुणाऽनुभवलालसया परवर्तकनिलयस्यापि संनिधिसेवकत्वस्य प्रार्थनम् । यथा वा—

प्रणिपत्य विधे भवन्तमद्धा विनिबद्धाञ्जलिरेकमेव याचे ।
जनुरस्तु कुले कृषीवलानामपि गोविन्दपदारविन्दभाजाम् ॥

अत्र हरिभक्तिरूपस्य गुणस्य लालसया हीनस्यापि कृषीवलकुलजन्मनः प्रार्थनम् ॥ ७५ ॥

---

## दोषविशेषानुबन्धाद्गुणत्वेन प्रसिद्धस्यापि द्वेषस्तिरस्कारः ॥

उदाहरणम्—

धिक्करोत्ययमहो धरापतिः पार्थिवत्वमपि यद्विविभ्रताम् ।
अस्तमेति विहृतिर्यथास्पृहं काव्यपुष्करनिधौ बुधैः सह ॥

अत्र पण्डितसहकृतयथेच्छकाव्यविहारोच्छेदकस्वरूपदोषानुबन्धात् पार्थिवत्वस्य सकलभोगैकसाधनस्यापि तिरस्कारः । यथा वा—

श्रियो मे मा मन्तु क्षणमपि च माद्यद्गजघटा-
मदभ्राम्यद्भृङ्गावलिमधुरसंगीतसुभगाः ॥
निमग्नानां यासु द्रविणरसपर्याकुलहृदां
सपर्यामोकर्यं हरिचरणयोरस्तमयते ॥

अत्र हरिचरणभजनच्युतिभयाद्राज्यसुखस्यापि तिरस्कारः॥७६॥

## गुणस्याऽनिष्टसाधनतया दोषत्वेन, दोषस्येष्टसाधनतया गुणत्वेन च वर्णनं लेशः ॥

उदाहरणम्—

दीनोपकारेषु सदा रतस्त्वं विश्रान्तिसौख्येन समुज्झितोऽसि ।
तवाऽनुकम्पापरिपूरिताया बुद्धेर्विपाकोऽयमहो क्षितीन्द्र ॥

अत्र दयार्द्रबुद्धिरूपगुणस्य विश्रान्तिसुखाऽभावरूपाऽनिष्टसाधनतया दोषत्वेन वर्णनम् । अपरप्रकारो यथा—

वरं कारागृहे वासो गृहदुःखनिरासकृत् ।
यत्र दारा गृहाः पुत्रा बन्धवो रिपवो न हि ॥

अत्र कारागृहवासरूपदोषस्य गृहदुःखनिरासरूपेष्टसाधनतया गुणत्वेन वर्णनम् । यथा वा—

नैर्गुण्यमेव साधीयो धिगस्तु गुणगौरवम् ।
शाखिनोऽन्ये विराजन्ते खण्ड्यन्ते चन्दनद्रुमाः ॥

अत्र नैर्गुण्यरूपदोषस्य गुणत्वेन, गुणगौरवरूपगुणस्य दोषत्वेन च वर्णनमर्थान्तरन्यासानुविद्धम् । पूर्वोदाहरणद्वये तु शुद्धं तत्॥७७॥

## सूचनीयत्वेनाऽभिप्रेतस्याऽर्थस्य प्रकृतार्थपरैः पदैः सूचनं मुद्रा ॥

पदैरिति बहुवचनमविवक्षितम् । तेनैकपदेन सूचनेपि न क्षतिः । उदाहरणम्—

त्वदर्पितार्थस्य लयेन धीरा अकिंचनाश्चेत् खलु तान् करोषि ।
अर्थान्तरन्यासत ऋद्धिभाजः समाश्रितं न त्यजति ह्युदारः ॥

अत्र प्रकृतार्थपरेण अर्थान्तरन्यासपदेन सूचनीयत्वेनाऽभिप्रेतस्य 'एतत्पद्यस्थाऽलंकारस्याऽर्थान्तरन्यास इति नाम' इत्यर्थस्य सूचनम् । यथा वा—

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥

अत्राऽनर्घराघवस्थसूत्रधारवचने अनेकपदैर्वक्ष्यमाणरामरावणवृत्तान्तस्य सूचनम् । इयं च मुद्रा नाऽलंकारपदवीमारोहत्यनुपस्कारकत्वादिति केचित् ॥ ७८ ॥

---

## प्रकृतार्थपरैः पदैः प्रसिद्धसहपाठानामर्थानां न्यसनं रत्नावली ॥

उदाहरणम्—

कान्त्याश्लिष्टो नृपाऽहर्पतिवदविकलश्चन्द्रवद्भौमवद्भू-
संमोदैकप्रदातेन्दुजवदय बुधो देवमन्त्रीव वक्ता ।
बल्यचर्यः शुक्रवद्भास्करिवदलघुगो राहुवत्सूर्यशत्रु-
र्त्युग्रः केतुवत्त्वं नवखचरतुला संविमर्ष्यैक एव ॥

अत्र राजवर्णनपरैरहर्पत्यादिपदैः प्रसिद्धसहपाठानां सूर्यादिनवग्रहरूपाणामर्थानां क्रमेण न्यसनम् । 'गुरुणा जघनेनैषा तरुणी मन्दगामिनी ।' इत्यादौ श्लेषेण प्रकृतार्थपरैर्गुर्वादिपदैः प्रसिद्धसहपाठानां बृहस्पत्याद्यर्थानां क्रमं विनैव निवेशनेप्ययमेवाऽलंकारः । सामान्यलक्षणाक्रान्तत्वात् । एवमप्रसिद्धक्रमाणां प्रसिद्धसहपाठानां

मध्ये स्थितस्य कमलारमणस्य कान्त्या
दुग्धाम्बुधिः समगमत् खलु नीलभावम् ।
त्वत्कीर्तिपूररुचितः पुनरप्यथाऽसौ
श्वेतत्वमेव भजते वसुधातलेन्द्र ॥

अत्र दुग्धसमुद्रस्य स्वसंक्रान्तभगवत्संबन्धिनीलत्वगुणप्राप्त्येन तिरोहितस्य श्वेतत्वरूपस्वगुणस्य कीर्तिपूरकान्तिप्रयुक्ता पुनः प्राप्तिः । अयमपि तद्गुण एवेत्येके । अपरप्रकारो यथा—" दीपे निर्वापितेऽप्यासीत् काञ्चीरत्नैर्महन्महः । " अत्र दीपरूपवस्तुनि विगतेपि पूर्वावस्थानुवृत्तिः स्पष्टैव । यथा वा—

द्वारं खड्गिभिरावृतं बहिरपि प्रस्विन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः ।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन् सैव चिरंतनप्रणयिनी शून्येपि राज्यस्थितिः ॥

अत्र राजरूपे वस्तुनि राज्यभ्रष्टत्वात् विगतेपि राज्यस्थितिरूपायाः पूर्वावस्थाया अनुवृत्तिः श्लेषेण प्रतिपादितेति पूर्वस्मात् विशेषः ॥ ८१ ॥

---

स्वगुणत्यागाऽभावपूर्वकं स्वसंनिहितवस्त्वन्तरसंबन्धिगुणाऽग्रहणमतद्गुणः ॥

अयं च तद्गुणविपर्ययभूतः । उदाहरणम्—

नीलं गिरिं शिवगलं कमलाधवं च
प्राप्नोत् त्वदीययशसो विमलः प्रवाहः ।
मालिन्यलेशकणिकामपि नो परं स
धत्ते नितान्तधवलोऽवनिमण्डलेन्द्र ॥

अत्र मालिन्यं न धत्त इत्युक्त्या यशःप्रवाहस्य कमलाधवादिमलिनवस्तुसंबन्धेपि तदीयमालिन्यरूपगुणस्याऽग्रहणं शाब्दम् । धवलत्वरूपस्वगुणत्यागाऽभावस्त्वार्थः । यथा वा—

नवरत्नादीनां न्यसनेऽप्ययमेवाऽलंकारः। एवं च सक्रमत्वाऽक्रमत्वाभ्यामस्य द्वैविध्यं बोध्यम् ॥ ७९ ॥

---

## स्वगुणत्यागपूर्वकं स्वसंनिहितवस्त्वन्तरसंबन्धिगुणग्रहणं तद्गुणः ॥

उदाहरणम्—

विश्रान्तस्य दिगन्तेषु यशःपूरस्य ते त्विषा।
दुग्धार्णवायते तावल्लवणोदो धराधिप ॥

अत्र लवणोदस्य यशःपूररूपसंनिहितवस्त्वन्तरकान्त्या धवलीभूतत्वात् स्पष्टमेव नीलत्वरूपस्वगुणत्यागपूर्वकं स्वसंनिहितवस्त्वन्तरसंबन्धिनो धवलत्वरूपगुणस्य ग्रहणमिति दुग्धार्णववदाचरणोपपत्तिः। यथा वा—

जगाद वदनच्छद्मपद्मपर्यन्तपातिनः।
नयन् मधुलिहः श्वैत्यमुदग्रदशनांशुभिः ॥

अत्र भ्रमरेण नीलत्वरूपस्वगुणत्यागपूर्वकं स्वसंनिहितवस्त्वन्तरसंबन्धिगुणस्य श्वैत्यस्य ग्रहणम्। यद्यपि उल्लासेऽप्यन्यदीयगुणेनाऽन्यस्य गुणाधानमस्ति, तथापि तत्राऽन्यदीयगुणप्रयुक्तं गुणान्तरं चूर्णादिक्षारताप्रयुक्तं हरिद्रादेः शोणत्वमिवाऽऽधीयते। तद्गुणे तु जपाकुसुमलौहित्यं स्फटिक इवाऽन्यदीयगुण एवाऽन्यत्रेति ततोऽस्य भेदः ॥ ८० ॥

---

## उत्सृष्टस्य स्वगुणस्य पुनः प्राप्तिरित्येकः पूर्वरूपप्रकारः। वस्तुनि विगतेऽपि पूर्वावस्थाया अनुवृत्तिरित्यपरः प्रकारः ॥

एवं च 'निरुक्तप्रकारद्वयाऽन्यतरत्वम्' पूर्वरूपसामान्यलक्षणम्। उदाहरणम्—

मध्ये स्थितस्य कमलारमणस्य कान्त्या
दुग्धाम्बुधिः समगमत् खलु नीलभावम् ।
त्वत्कीर्तिपूररुचितः पुनरप्यथाऽसौ
श्वेतत्वमेव भजते वसुधातलेन्द्र ॥

अत्र दुग्धसमुद्रस्य स्वसंक्रान्तभगवत्संबन्धिनीलत्वगुणप्राबल्येन तिरोहितस्य श्वेतत्वरूपस्वगुणस्य कीर्तिपूरकान्तिमयुक्ता पुनः प्राप्तिः । अयमपि तद्गुण एवेत्येके । अपरप्रकारो यथा—" दीपे निर्वापितेऽप्यासीत् काञ्चीरत्नैर्महन्महः । " अत्र दीपरूपवस्तुनि विगतेपि पूर्वावस्थानुवृत्तिः स्पष्टैव । यथा वा—

द्वारं खड्गिभिरावृतं बहिरपि प्रस्विन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः ।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन् सैव चिरंतनप्रणयिनी शून्येपि राज्यस्थितिः ॥

अत्र राजरूपे वस्तुनि राज्यभ्रष्टत्वात् विगतेपि राज्यस्थितिरूपायाः पूर्वावस्थाया अनुवृत्तिः श्लेषेण प्रतिपादितेति पूर्वस्मात् विशेषः ॥८१॥

---

## स्वगुणत्यागाऽभावपूर्वकं स्वसंनिहितवस्त्वन्तरसंबन्धिगुणाऽग्रहणमतद्गुणः ॥

अयं च तद्गुणविपर्ययभूतः । उदाहरणम्—

नीलं गिरिं शिवगलं कमलाधवं च
प्राप्नोत् त्वदीययशसो विमलः प्रवाहः ।
मालिन्यलेशकणिकामपि नो परं स
धत्ते नितान्तधवलोऽवनिमण्डलेन्द्र ॥

अत्र मालिन्यं न धत्त इत्युक्तया यशःप्रवाहस्य कमलाधवादिमलिनवस्तुसंबन्धेपि तदीयमालिन्यरूपगुणस्याऽग्रहणं शाब्दम् । धवलत्वरूपस्वगुणत्यागाऽभावस्त्वार्थः । यथा वा—

गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ॥

अत्र राजहंसेन शुभ्रत्वरूपस्वगुणत्यागाऽभावपूर्वकं गङ्गायमुनयोर्गुणस्याऽग्रहणम् । अथायमवज्ञाया नातिरिच्यत इति चेन्न । तद्गुणप्रकरणोक्तरीत्या उल्लासतद्गुणयोः परस्परं भेदसिद्धौ तद्विपर्ययभूतयोरवज्ञाऽतद्गुणयोरपि भेदस्य सिद्धेरित्येके ॥ ८२ ॥

---

कस्यचिद्वस्तुनः सांनिध्येन पूर्वसिद्धस्य स्वगुणस्योत्कर्षोऽनुगुणः ॥

उदाहरणम्—

रजताऽचलोऽपि भवदाप्तजन्मना
हरिदन्तसंगतिकृते प्रसर्पता ।
क्षितिमण्डलेन्द्र यशसाऽतिशुभ्रतां
भजतेऽथ किं पुनरहो हिमाचलः ॥

अत्र कैलासपर्वतस्य रजतमयत्वात् स्वतःसिद्धस्य शुभ्रत्वरूपगुणस्य यशोरूपवस्तुसांनिध्येनोत्कर्षः । यथा वा—

कपिरपि च कापिशायनमदमत्तो वृश्चिकेन संदष्टः ।
अपि च पिशाचग्रस्तः किं ब्रूमो वैकृतं तस्य ॥

अत्र कपित्वजातेः स्वतःसिद्धस्य वैकृतस्य मद्यादिभिरुत्कर्षः । अयं च प्रौढोक्तेर्नातिरिच्यत इत्येकेपामभिप्रायः । अतिरिच्यत इत्यन्येषाम् ॥ ८३ ॥

---

स्फुटमुपलभ्यमानस्य कस्यचिद्वस्तुनो लिङ्गैरतिसाम्यात् भिन्नत्वेनाऽगृह्यमाणानां वस्त्वन्तरलिङ्गानां स्वकारणाऽननुमापकत्वं मीलितम् ॥

स्वकारणं चाऽनध्यक्षं बोध्यम् । नेन सामान्ये नाऽतिप्रसङ्गः ।
उदाहरणम्—

दिङ्मण्डलेऽस्मिन् यशसोज्ज्वलेन
प्रकाशिते भो भवतः क्षितीन्द्र ।
पूर्वाद्रिशृङ्गान्तरितं कथं नु
जानीमहीन्दोरुदयं वदैतत् ॥

अत्र रात्रौ चन्द्रोदयसमये 'किमुदितश्चन्द्रः' इति पृच्छन्तं राजानं प्रति कवेरुक्तिरियम्। अत्र चन्द्रोदयगमकस्य दिग्धवलीभवनादेर्यशोरूपोपलभ्यमानवस्तुजनितेन तेन अतिसाम्यमूलकाद्भेदस्याग्रहात् चन्द्रोदयरूपस्वकारणाऽनुमित्यजनकत्वम्। चन्द्रोदयस्याऽध्यक्षत्वबोधकं पूर्वाद्रिशृङ्गान्तरितमिति विशेषणम्। यथा वा—

अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम्।
इति स्फुरितमङ्गके मृगदृशः स्वतो लीलया
तदत्र न मदोदयः कृतपदोपि संलक्ष्यते ॥

अत्र स्फुटमुपलभ्यमानानां तरुण्यङ्गानां दृक्तारल्यादिरूपेण लिङ्गेन मदरूपवस्त्वन्तरजन्यं दृक्तारल्यादिरूपं लिङ्गमतीव सदृशमिति मदजन्यलिङ्गस्य तरुण्यङ्गलिङ्गभिन्नत्वेनाऽग्रहणान्मदरूपस्वकारणाऽनुमित्यजनकत्वम्। पूर्वोदाहरणे यशःकृतं धावल्यरूपं लिङ्गं दिङ्मण्डले आगन्तुकम्। इह तु दृक्तारल्यादिरूपं लिङ्गमङ्गेषु स्वाभाविकम् ॥ ८४ ॥

---

**प्रत्यक्षविषयस्याऽपि वस्तुनो बलवत्सजातीयग्रहणकृतं तद्भिन्नत्वेनाऽग्रहणं सामान्यम् ॥**

मीलिते तु निगूह्यमानं वस्तु न प्रत्यक्षविषय इति न तत्रातिप्रसक्तिः। उदाहरणम्—

मनुजेन्द्र यशःस्तोमे भवतः प्रसृतेऽक्षिमार्गमपि याता।
लोकानामविभाव्या ज्योत्स्ना भजते गतागते सततम् ॥

अत्र प्रत्यक्षविषयस्य चन्द्रिकारूपवस्तुनो यशःस्तोमतः पृथ-

त्वेनाऽदर्शनात् तस्य यशःस्तोमरूपधवलवस्तुदशग्रहणकृतं यशः-स्तोमभिन्नत्वेनाऽग्रहणमुपपन्नमिति लक्षणसंगतिः। यथा वा—

मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्चिताः।
अविभाव्याः सुखं यान्ति चन्द्रिकास्वभिसारिकाः॥

अत्र प्रत्यक्षविषयस्यापि अभिसारिकारूपवस्तुनश्चन्द्रिकाभिन्नत्वेनाऽग्रहणम्। अत्राऽन्ये—

मीलितं यदि सादृश्यात् भेद एव न लक्ष्यते।
रसो नालक्षि लाक्षायाश्चरणे सहजाऽरुणे॥

अत्र चरणाऽलक्तकरसयोररुणिमगुणप्रयुक्तसादृश्यात् भेदाऽनध्यवसायः।

सामान्यं यदि सादृश्यात् विशेषो नैव लक्ष्यते।
पद्माकरप्रविष्टानां मुखं नाऽलक्षि सुभ्रुवाम्॥

मीलितालंकारे एकेनाऽपरस्य भिन्नस्वरूपाऽनवभासरूपं मीलनं क्रियते। सामान्यालंकारे तु भिन्नस्वरूपाऽवभासेऽपि व्यावर्तकविशेषो नोपलक्ष्यत इति भेदः। मीलितोदाहरणे हि चरणादेर्वस्त्वन्तरत्वेनाऽऽगन्तुकं यावकादि न भासते। सामान्योदाहरणे तु पद्मानां मुखानां च व्यक्त्यन्तरतया भानमस्त्येव। किंतु इदं पद्ममिदं मुखमिति विशेषः परं नोपलक्ष्यते। अत एव भेदतिरोधानान्मीलितम्, तदतिरोधानेऽपि साम्येन व्यावर्तकाऽनवभासे सामान्यमित्युभयोरप्यन्वर्थतेत्यादि निरूप्य,

भेदवैशिष्टयोः स्फूर्तावुन्मीलितविशेषकौ।
हिमाद्रिं त्वद्यशोमग्नं सुराः शीतेन जानते॥
लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च।

मीलितन्यायेन भेदाऽनध्यवसाये प्राप्ते कुतोऽपि हेतोर्भेदस्फूर्तौ मीलितप्रतिद्वन्द्व्युन्मीलितम्। सामान्यरीत्या विशेषाऽस्फुरणे प्राप्ते कुतश्चित्कारणात् विशेषस्फूर्तौ तु सामान्यप्रतिद्वन्द्वी विशेषकः।

क्रमेणोदाहरणद्वयमित्याहुः । एके पुनरुन्मीलितविशेषकयोरनुमानालंकारेणैव गतार्थत्वात् नालंकारान्तरत्वमिति ॥ ८५ ॥

## प्रश्नप्रतिबन्धकज्ञानविपर्यीभूतोऽर्थ उत्तरम् ॥

प्रश्नश्च जीप्सा । सा ज्ञानविषयेच्छा । सा च उत्तरवाक्याद्विषयीभूते ज्ञाने जाते निवर्तते । तच्च उत्तरं द्विविधम् । उन्नीतप्रश्नं निबद्धप्रश्नं चेति । उदाहरणम्—

त्वया ह्यनुगृहीतस्य सखा मे कान्दिशीकताम् ।
प्रयातश्चिन्तया तस्य स्तब्धत्वं मनुजाधिप ॥

अत्र कस्यचित् कवेः राजानं प्रत्युत्तरेण तत्कर्तृकः स्तब्धत्वनिमित्तप्रश्न उन्नीयते । स्तब्धत्वनिमित्तमपृष्टस्य स्तब्धत्वनिमित्तोक्तेरयोगात् । कस्य हेतोः स्तब्धोऽसीति राज्ञः प्रश्न उत्तरवाक्यजनितेन ज्ञानेन निवर्तत इति लक्षणसंगतिः । इदं चोत्तरं त्वदनुग्रहेण दारिद्र्यमुक्तोऽस्मि, सम्प्रति न किमपि मम याचनीयमित्यभिप्रायगर्भम् । इदमुन्नीतप्रश्नस्योदाहरणम् । निबद्धप्रश्नस्योदाहरणं यथा—

कुशलं तस्या, जीवति, कुशलं पृच्छामि, जीवतीत्युक्तम् ।
पुनरपि तदेव कथयसि, मृतां नु कथयामि या श्वसिति ॥

पद्ये एव प्रश्नस्य निबन्धनादस्य निबद्धप्रश्नत्वम् । इमान्यनुतप्तनायिकाविषयाणि तत्सकाशादागतायाः सख्या नायकस्य च प्रश्नोत्तराणि। निबद्धप्रश्ने हि प्रश्नोत्तरयोरसकृदुपादाने चमत्कारित्वम् । ' किं तीर्थं हरिपादपद्मभजनम् ' इत्यादिप्रश्नपरिसंख्यायामन्यव्यवच्छेदे तात्पर्यम् । अत्र तु वाच्ये एवेति ततोऽस्य भेदः । अस्य चाऽलंकारस्य प्रश्नोत्तरयोरन्यतरस्योभयोश्च साभिप्रायत्वेन निरभिप्रायत्वेन चाऽनेके भेदाः । एवं प्रश्नाऽभिन्नोत्तरत्वादिनाऽपि । यथा—" केदारपोषणरताः, के खेऽटाः किं चलं वयः । " अत्र केदारपोषणरता इति प्रश्नाभिन्नमुत्तरम् । के खेऽटाः, किं चलमिति प्रश्नद्वयस्य तु वय इत्येकमेवोत्तरम् ॥ ८६ ॥

---

**आकारेणेङ्गितेन वोन्नीतस्य सूक्ष्मार्थस्य कयाचित् भङ्ग्याऽन्यस्मै सूचनं सूक्ष्मम् ॥**

आकारः संस्थानविशेषः । इङ्गितं चेष्टाविशेषः । सूक्ष्मः स्थूलमतिभिरसंवेद्यः । उदाहरणम्—

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं काऽपि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख ॥

अत्र कण्ठे स्वेदविशेषप्रयुक्तकुङ्कुमसंभेदलक्षणेन आकारेण उन्नीतो नायिकायाः पुरुषायितरूपः सूक्ष्मोऽर्थस्तस्या हस्ते पुरुषहस्तोचितखड्गलेखालेखनभङ्ग्या तस्यै कयाचित् सूचितः । विपरीतरतौ हि नायिकाया वक्त्रात् गलितस्य स्वेदविशेषस्य कण्ठे एव गमनं संभवति । तेन च कण्ठे कुङ्कुमसंभेदो घटत एव । अत्र च स्वेदविशेषप्रयुक्तकुङ्कुमसंभेदेन हेतुना जायमानमपि पुरुषायितस्य साध्यस्याऽनुमानं सूक्ष्मालङ्कारस्याऽङ्गम् । इङ्गितेन यथा—

संकेतकालमनसं विटं ज्ञात्वा विदग्धया ।
ईषन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥

अत्र विटनेत्रगतचेष्टाविशेषेण उन्नीतस्तज्जिज्ञासितः संकेतकालो निशाकालसूचकेन कमलनिमीलनेन विटाय कामिन्या सूचितः । रात्रौ कमलानि निमीलन्तीति प्रसिद्धमेव । वक्त्रस्यन्दीत्युदाहरणे कैश्चित् प्रतिपादितः पिहितालंकारः सूक्ष्मान्नातिरिच्यते । उभयोरेकलक्षणाक्रान्तत्वात् ॥ ८७ ॥

---

**जात्यादिगतस्वभावस्य वर्णनं स्वभावोक्तिः ॥**

आदिपदेन क्रियादिपरिग्रहः । उदाहरणम्—

सद्वर्गं परिपालयन् कविगणं संमानयन् प्रीणयन्
लोकं शत्रुकुलं दहन् खलतरालिं दण्डयन् दीनगम् ।
मथ्नन् क्लेशमय श्रियं पृथुलयन् नीत्या यशः ख्यापयन्
जीयाद्भूपति गरुरञ्जनपरः श्रीवासुदेवः प्रभुः ॥

अत्र सद्वर्गपरिपालनादिकं राज्ञरञ्जनक्रियास्वभावस्य वर्णनम् । जातिस्वभाववर्णनं यथा—" कुरङ्गैरुत्तरङ्गाक्षैः स्तब्धकर्णैरुदीक्ष्यते । " अत्र उत्तरङ्गाक्षैः स्तब्धकर्णैरिति विशेषणद्वयेन कुरङ्गजातिस्वभावो वर्णितः । इत्यर्थालंकारा दिङ्मात्रेण निरूपिताः॥ ८८ ॥

---

यद्यप्युक्तेभ्योऽलंकारेभ्योऽन्येपि कतिचन दृश्यन्ते । तथापि तेषु केषां चिदुक्तेष्वेवाऽन्तर्भावः । केषांचित्तु व्यङ्ग्यप्रभेदत्वेन केषांचित् पुनरचमत्कारित्वेनाऽनलंकारत्वमेव । यथा—

**अर्थविशेषाभिधायिनो नाम्नो योगवशादर्थान्तरोपवर्णनं निरुक्तिः** ॥ उदाहरणम्—" ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान् । " अत्र चन्द्रोद्देश्यके विरहिणीवाक्ये निशाकररूपविशेषार्थबोधकस्य दोषाकरेति नाम्नो दोषखनिरूपाऽर्थान्तरस्य वर्णनम् । अयं श्लेषान्नातिरिच्यते, किंतु श्लेषविशेष एवेति ॥ १ ॥

**तटस्थवञ्चनार्थैकोद्देश्यकस्य वाक्यस्य तदन्यं प्रति कथनं गूढोक्तिः** ॥ उदाहरणम्—" वृथाऽपेहि परक्षेत्रादायाति क्षेत्ररक्षकः । " अत्र परकलत्रं भुञ्जानं कामुकं प्रति वक्तव्यस्य वाक्यस्य तटस्थैर्मा ज्ञायीति परक्षेत्रे सस्यानि भक्षयन्तं कंचिदुक्षाणं समीपस्थं प्रति कथनम् । क्षेत्रशब्दः श्लिष्टः । अयं ध्वनिप्रभेद एव नालंकारः । नहि सर्वोऽपि व्यङ्ग्यवर्गोऽलंकारगोष्पदे अन्तर्भावयितुं शक्यते वेधसाऽपीति ॥ २ ॥

**प्रसिद्धस्य निषेधस्य साभिप्रायोऽनुवादः प्रतिषेधः** ॥ उदाहरणम्—" न द्यूतमेतत् कितव क्रीडनं निशितैः शरैः । " अत्र युद्धरङ्गे प्रत्यवतिष्ठमानं शाकुनिकं प्रति विदग्धवाक्ये युद्धेऽक्षद्यूतत्वनिषेधस्य प्रसिद्धस्याप्यनुवादोऽक्षद्यूते एव तव प्रागल्भ्यं न युद्धेस्तीत्युपहासगर्भः । स चोपहासः कितवपदेनाऽविष्कृतः । अयमपि ध्वनिरेव नाऽलंकार इति ॥ ३ ॥

**सिद्धस्य विधानं विधिः** ॥ उदाहरणम्—" पञ्चमोदञ्चने काले कोकिलः कोकिलो भवेत् । " अत्र कोकिले कोकिलत्वस्य

सिद्धस्यैव विधानम् । घटो घट इतिवत् द्वितीयकोकिलपदमनुपयुक्तशक्यार्थकत्वान्मधुरतरपञ्चमस्वरशालित्वरूपलक्ष्यार्थकम् । इदं च विधानं कोकिलस्य सकलजनहृद्यत्वं गर्भीकरोतीति सुन्दरम् । गर्भितोऽर्थश्च पञ्चमोदञ्चने इति कालविशेषणेनाऽऽविष्कृतः । अस्यापि ध्वनिनैव गतार्थता । क्वचित्तु गुणीभूतव्यङ्ग्येन गतार्थतेति ॥ ४ ॥

आनुकूल्यानुबन्धि प्रातिकूल्यमनुकूलम् ॥ उदाहरणम्—" कुपिताऽसि यदा तन्वि विधाय करजक्षतम् । बधान भुजपाशाभ्यां कण्ठमस्य दृढं तदा ॥ " इयं हि नायिकां प्रति सख्युक्तिः । अस्य नाऽलंकारत्वमिति ॥ ५ ॥

लोकप्रवादस्याऽनुकरणं लोकोक्तिः ॥ उदाहरणम्—" सहस्व कतिचिन्मासान् मीलयित्वा विलोचने । " अत्र लोचने मीलयित्वेति लोकप्रवादानुकरणम् । तदेव अर्थान्तरगर्भितं चेत् छेकोक्तिरित्युच्यते । लोकोक्तेश्छेकोक्तेश्चापि नालंकारत्वमिति ॥ ६ ॥

यथार्थवत्कृत्रिमं शब्दः ॥ उदाहरणम्—" अये कृष्णः परात्माऽयं लीलाकृदिति निश्चिनु । " अयमपि नालंकारः । एवमन्येऽपि ज्ञेया इत्याहुरित्यन्यत्र विस्तरः ॥ ७ ॥

---

अथ प्रोक्तानामलंकाराणामेकत्राऽवस्थानस्य संसृष्टिसंकराख्ये द्वे विधे । तत्र—

## तिलतण्डुलन्यायेनाऽलंकाराणां परस्परनिरपेक्षतयैकत्राऽवस्थानं संसृष्टिः ॥

अलंकाराणामिति बहुवचनमनेकत्वोपलक्षणम् । तेन द्वयोरपि संग्रहः । एकत्र वाक्ये वृत्ते वा । यथैकत्र स्थितानां तिलतण्डुलानां स्वरूपं परस्परनिरपेक्षं स्फुटमवगम्यते, तथैवोपमादीनामलंकाराणां यथासंभवमेकत्र स्थितानां स्वरूपं परस्परनिरपेक्षं स्फुटमवगम्यते चेत् संसृष्टिः । उदाहरणम्—

राजन्कविबुधोपेतो भवांश्चन्द्रो न संशयः ।
यस्य ते विमला कीर्तिश्चन्द्रिकेव विराजते ॥

अत्र पूर्वार्धे भवांश्चन्द्र इति रूपकस्य, उत्तरार्धे चन्द्रिकेव कीर्तिरित्युपमायाश्च परस्परनिरपेक्षतयाऽवस्थानात् संसृष्टिः । यथा वा—

देवः पायादपायान्नः स्मेरेन्दीवरलोचनः ।
संसारध्वान्तविध्वंसहंसः कंसनिषूदनः ॥

अत्र पायादपायादिति यमकस्य, संसारेत्याद्यनुप्रासस्य, स्मेरेन्दीवरलोचन इत्युपमायाः, संसारध्वान्तविध्वंसहंस इति रूपकस्य च परस्परनिरपेक्षतयाऽवस्थानात् संसृष्टिः । तत्र यमकानुप्रासौ शब्दालंकारौ । उपमारूपके अर्थालंकारौ ॥ ८९ ॥

---

## नीरक्षीरन्यायेनाऽलंकाराणां स्वातन्त्र्येणैकत्राऽनवस्थानं संकरः ॥

अत्राप्यलंकाराणामिति बहुवचनमनेकत्वोपलक्षणम् । तेन द्वयोरपि संग्रहः । एकत्र वाक्ये वृत्ते वा । यथैकत्र स्थितानां नीरक्षीराणां स्वतन्त्रतया स्वरूपं नाऽवगम्यते, तथैवैकत्र स्थितानामलंकाराणां स्वरूपं स्वतन्त्रतया स्पष्टं नाऽवगम्यते चेत् संकरः । स च अङ्गाङ्गित्वेन संदेहेन एकपदाश्रितत्वेन च त्रिविधः । उदाहरणम्—

राजन् तव यशःकान्त्या पाण्डुरो मधुसूदनः ।
नालिङ्ग्यते शिव इति सत्या कमलया किल ॥

अत्र यशःकान्त्या पाण्डुर इति तद्गुणमपेक्ष्यैव शिव इति भ्रान्त्यलंकारो निष्पद्यमानस्वरूपः सन् चमत्कारं जनयति । तद्गुणोऽप्यत्र भ्रमजनकतया भ्रान्त्यलंकारसाहाय्यकरणेनैव चमत्कारविशेषं जनयति न स्वातन्त्र्येणेति परस्परमनुग्राह्याऽनुग्राहकत्वात् अङ्गाङ्गिभावसंकरः । एवं च एकत्राऽवस्थितयोर्द्वयोरपि चमत्कारजनने पारतन्त्र्यात् पारतन्त्र्येण एकत्राऽवस्थानं घटते । स्वातन्त्र्येण पुनर्न घटत इति स्वातन्त्र्येणैकत्राऽनवस्थानात् सामान्यलक्षणसमन्वयः । एवं बहूनामप्यूहनीयम् । संदेहसंकरो यथा—

इदमाभाति गगने भिन्दानं संततं तमः।
अमन्दनयनानन्दकरं मण्डलमैन्दवम्॥

अत्र किम् 'इदम्' इत्यस्य इन्दुमण्डलपरामर्शकतया मुखस्य इन्दुमण्डलेन निगरणादतिशयोक्तिः। उत इदमिति मुखं निर्दिश्य इन्दुमण्डलतादात्म्यारोपात् रूपकम्। आहोस्वित् इदमिति मुखस्य इन्दुमण्डलस्य चेति द्वयोरपि प्रकृतयोराभातीत्येकधर्मान्वयात् तुल्ययोगिता। अथवा इदमिति प्रकृतस्य मुखस्य अप्रकृतस्य च चन्द्रमण्डलस्य आभातीत्येकधर्मान्वयात् दीपकम्। किंवा प्रस्तुतचन्द्रमण्डलवृत्तान्तेन अप्रस्तुतमुखवृत्तान्तस्य प्रतीत्या समासोक्तिः। यद्वा अप्रस्तुतचन्द्रमण्डलव्यवहारेण प्रस्तुतमुखव्यवहारस्य प्रशंसनात् अप्रस्तुतप्रशंसा। किमथवा कामोद्दीपकः कालो वर्तते इति विवक्षितार्थस्य भङ्गयन्तरेण प्रतिपादनात् पर्यायोक्तम्। किमु वा प्रस्तुतचन्द्रमण्डलव्यवहारेण प्रस्तुतमुखव्यवहारस्य प्रशंसनात् प्रस्तुताङ्कुर इति बहूनामलंकाराणां साधकबाधकयोरभावेन संदेहात स्वातन्त्र्येणाऽनवस्थानमेवेति संदेहसंकरः। साधकबाधकयोरन्यतरस्य सत्वे तु न संदेहः। यथा—"मुखचन्द्रः प्रकाशते" इत्यत्र प्रकाशाख्यो धर्मो रूपकस्य साधकः। स च धर्मो मुखेऽप्युपचरितत्वेन संभवत्येवेति नोपमाया बाधकः। "सुन्दरं वदनाम्बुजम्" इत्यादौ प्रयुज्यमानः सौन्दर्यरूपः साधारणधर्मः "उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे" इति सूत्रे सामान्याऽप्रयोगे इति निषेधात् वदनम् अम्बुजमिवेति उपमितसमासो न भवतीत्युपमाया बाधकः। समासस्तु वदनमेव अम्बुजं वदनाम्बुजमिति मयूरव्यंसकादित्वात बोध्यः। एकपदाश्रितत्वेन संकरो यथा—

स्पष्टोल्लसत्किरणकेसरसूर्यबिम्ब-
विस्तीर्णकर्णिकमथो दिवसारविन्दम्।
श्लिष्टाष्टदिग्दलकलापमुखावतार-
बद्धान्धकारमधुपावलि संचुकोच॥

अत्र पादत्रये किरणकेसर–सूर्यबिम्बविस्तीर्णकर्णिक–दिग्दल-कलापेति रूपकानुप्रासयोः संकरः। स च यत्पद (शब्द) माश्रित्याऽनुप्रासः स्थितस्तत्पदमेवाश्रित्य रूपकं स्थितमिति एकपदाश्रितः। "कुरवका रवकारणतां ययुः।" इत्यत्र रवका रवका इत्येकं वकार वकार इत्येकमिति द्वयोर्यमकयोरेकपदा (शब्दा) श्रितः संकरः। अर्थालंकारसंकरो यथा—

परस्परतपःसंपत्फलायितपरस्परौ।
प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः॥

अत्र पूर्वार्धे पार्वतीतपःसंपत्फलमिव आचरन् परमेश्वरः, परमेश्वरतपःसंपत्फलमिव आचरन्ती पार्वतीति द्वयोः परस्परमुपमयोः फलायितेत्येकवाचकाश्रितत्वरूपः संकरः। उत्तरार्धगताभ्यां मातापितराविति रूपकाभ्याम् उक्तोपमयोस्तु संसृष्टिरियमन्यदेतत्। एवमन्यविधान्यप्युदाहरणान्यूहनीयानीत्यन्यत्र विस्तर इति शिवम्॥९०॥

---

आनन्दं हृदयाङ्गणे खलु परं तन्वन्ति ये मामके
प्रायस्ते निखिला मया लघुतयाऽलंकारधुर्या अमी।
निर्मायाऽथ सुवर्णपङ्क्तिभिरहो सल्लक्षणैरन्विताः
प्राज्ञानां पुरतोऽर्पिताः परमया प्रीत्या किमन्यत्पुनः॥
अहो सुवर्णशून्यानामस्माकं कष्टतोऽर्जितम्।
सुवर्णमिदमेवैतत् भोक्तव्यं हि मनीषिभिः॥
संग्रहोऽयं मया तावदल्पज्ञेन चिकीर्षितः।
प्रत्नोक्तीनामगादीशदयालेशेन पूर्णताम्॥
संप्रदायं मतं चालंकारिकाणामजानता।
अलेखि किंचित् धाष्टर्येन सूरयः शोधयन्तु तत्॥
बालालंकारमतनोत् प्रभाकर इमं किल।
बालार्थं तुष्यता तेन वासुदेवमहेश्वरौ॥

## समर्पणम्—

हेरम्बपादाम्बुजभक्तिपूतस्तत्कीर्तनासक्तमना विनीतः ।
सद्धर्मर रञ्जितलोकचित्तः प्रजावने दक्षतरो य आस्ते ॥
मानी कलानां खलु मर्मवेत्ता वशी च कौण्डिन्यकुलप्रदी
उदारचेता व्यसनैर्विमुक्तः प्रियः प्रजायाः प्रथितो य आ
तस्मै मिरजसंस्थानाधीशगङ्गाधराय हि ।
बालालंकारनामाख्यं ग्रन्थः सादरमर्पितः ॥

इति ।

शकस्य हायने पूर्णे द्विद्व्यष्टशशि ( १८२२ ) पूरणे ।
बालालंकारनामाख्यं ग्रन्थः संपूर्णतामगात् ॥

इति श्रीमच्चित्तपावनजातीयगार्ग्यकुलोत्पन्नकेशवभट्टात्मजपर्वतीदारगर्भजस्य प्रभाकरशास्त्रिणः कृतिषु बालालंकारः संपूर्णतामगात्।

श्रीदत्तात्रेयः प्रसन्नोस्तु ॥

---

॥ बालालंकारः समाप्तः ॥

---

## काव्यग्रन्थाः।

| नाम. | | की.रु.आ. | ट.म.रु.आ. |
|---|---|---|---|
| ४७८ काव्यमंजरी छपके तयार है. .... | क | १-८ | ०-१ |
| ४७९ गीतगोविन्द संस्कृतटीका और भाषाटीका | क | १-४ | ०-३ |
| ४८० माघकाव्य ( शिशुपालवध ) सटीक संपूर्ण | क | २-८ | ०-६ |
| ४८१ ,, ,, ३ सर्ग .... | क | ०-८ | ०-१ |
| ४८२ ,, ,, ९ सर्ग .... | क | १-४ | ०-२ |
| ४८३ किरातार्जुनीयकाव्य सटीक .... | नि | २-० | ०-४ |
| ४८४ भर्तृहरिशतकत्रयसंस्कृतटीका और भाषाटीका | क | १-२ | ०-२ |
| ४८५ ,, तथा रफ् .... | क .... | १-० | ०-२ |
| ४८६ वैराग्यशतक संस्कृतटीका और भाषाटीका. | क | ०-६ | ०-१२ |
| ४८७ भोजप्रबंध भाषाटीका .... .... | क | १-४ | ०-॥ |
| ४८८ भोजप्रबन्धकेवलभाषा ग्लेजकागज .... | क | ०-१२ | ०-१॥ |
| ४८९ भोजप्रबंध मूलमात्र .... .... .... | क | ०-७ | ०-१ |
| ४९० ऋतुसंहार काव्य भाषाटीका और संस्कृतटीकासह .... .... | क | ०-७ | ०-१ |
| ४९१ रघुवंश मल्लीनाथकृत संजीवनी टीका और टिप्पणी सहित जिल्दबंद ग्लेज .... | २ | १-८ | ०-४ |
| ४९२ ,, ,, तथा रफ .... .... | २ | १-४ | ०-४ |
| ४९३ रघुवंशसटीक बारीक अक्षर सादा .... | क | ०-१२ | ०-२ |
| ४९४ रघुवंश सटीक १ सर्गसे ९ सर्गतक .... | क | ०-९ | ०-१ |
| ४९५ ,, ६ सर्गसे १० सर्गतक .... | क | ०-९ | ०-१ |
| ४९६ कुमारसंभव सटीक .... .... | २ .... | १-४ | ०-३ |
| ४९७ मूर्खशतक भाषाटीका .... .... | क | ०-१ | ०-॥ |
| ४९८ दशकुमारचरित्र सटीक .... .... | नि | १-८ | ०-३ |
| ४९९ गीतगोविन्दमूल .... .... .... | क | ०-३ | ०-॥ |
| ५०० हितोपदेश भाषाटीका अतिउत्तम .... | क | १-४ | ०-३ |
| ५०१ हितोपदेश मूल .... .... .... | २ | ०-८ | ०-१ |
| ५०२ रामकृष्णविलोमकाव्य .... .... | ग | ०-४ | ०-॥ |
| ५०३ [illegible] .... .... .... | १ | ०-४ | ०-॥ |

| | | | |
|---|---|---|---|
| ५०४ भामिनीविलास मूल .... .... | १ | ०-४ | ०-॥ |
| ५०५ ,, भाषाटीका .... | २ | १-० | ०-२ |
| ५०६ मेघदूतकाव्यसटीक .... .... .... | नि | ०-६ | ०-१ |
| ५०७ मेघदूत सान्वय भाषाटीका .... | क | ०-८ | ०-१ |
| ५०८ रघुवंश भाषाटीका पदयोजना तात्पर्यार्थ और सरलार्थसहित .... .... .... | २ | ३-८ | ०-७ |
| ५०९ पद्यावलीअनेकमहानुभावोंके संग्रहीतश्लोक | १ | ०-८ | ०-१ |
| ५१० कविरहस्यं सटिप्पणी कं० .... .... | गो | ०-६ | ०-॥ |
| ५११ कृष्णामृततरङ्गिका सटीक .... .... | गो | ०-५ | ०-॥ |
| ५१२ चौरपञ्चाशिका टिप्पणीसहित .... | गो | ०-२ | ०-॥ |
| ५१३ कलिविडम्बन मूल .... .... .... | गो | ०-२ | ०-॥ |
| ५१४ कलिविडम्बन भाषाटीकासहित .... | १ | ०-४ | ०-॥ |
| ५१५ सौन्दर्यलहरी सटिप्पण .... .... | गो | ०-३ | ०-॥ |
| ५१६ कटाक्षशतक सटिप्पण .... .... | गो | ०-३ | ०-॥ |
| ५१७ भावशतक सटिप्पण .... .... .... | गो | ०-३ | ०-॥ |
| ५१८ आर्याशतक सटिप्पण .... .... | गो | ०-२ | ०-॥ |
| ५१९ कामाक्षीस्तुतिशतक सटिप्पण .... | गो | ०-३ | ०-॥ |
| ५२० अम्बाष्टक सटिप्पण .... .... .... | गो | ०-२ | ०-॥ |
| ५२१ प्रशस्तिकाशिका .... .... .... | गो | ०-३ | ०-॥ |
| ५२२ मक्तिरत्नावली .... .... .... | १ | ०-४ | ०-॥ |
| ५२३ घटकर्परकाव्य भाषाटीका .... .... | क | ०-२ | ०-॥ |
| ५२४ राक्षसकाव्यसंस्कृतटीकाऔरभाषाटीकासहित | २ | ०-२ | ०-॥ |
| ५२५ शृंगारतिलक भाषाटीका सहित .... | २ | ०-४ | ०-॥ |
| ५२६ शृंगारादिनवरस निरूपण भाषाटीका-( शृंङ्गार का अतीव चमत्कारी ग्रन्थ ) .... | २ | ०-६ | ०-१ |
| ५२७ मध्वविजय .... .... .... | नयु | ०-१२ | ०-२ |
| ५२८ अश्वघाटी काव्य भा० टी० .... .... | क | ०-४ | ०-॥ |
| ५२९ राधाविनोद काव्य भाषाटीका .... | क | ०-२ | ०-॥ |
| ५३० प्रेमलतिका भाषाटीका .... .... | क | ०-२ | ०-॥ |
| ५३१ पञ्चतंत्र भाषाटीका .... .... | क | २-० | ०-४ |
| ५३२ अमरुशतक शंकराचार्यकृत .... | २ | ०-१० | ०-१ |

५५५ मरहट्टा सरदार और रौशनआरा औरंग-
जेबकी पुत्रीका प्रेम .... .... क ०

५५६ आत्मस्तुति प्रहसन भाषामें .... क ०-

५५७ मनहरण उपन्यास .... .... क ०-४

५५८ राजेंद्रमोहिनी उपन्यास .... क ०-२

५५९ एज यू लाइक इट् ( शेक्सपीयर कृत ) नाटक पु०
गोपीनाथ एम. ए. जयपुर राजवकीलकृत २ १-०

५६० अदालतका स्वप्न भाषामें .... क ०-२

५६१ प्रणयीमाधव ( नीतिपूर्ण तथा शिक्षादायक
उपन्यास ) .... .... .... .... क १-४

## चम्पूग्रन्थाः ।

५६२ भागवतचम्पू सटिप्पण .... .... गो १-०

५६३ भार्गवचम्पू सटिप्पण .... .... गो ०-६ ०

५६४ नृसिंहचम्पू .... .... .... .... २ ०-४ ०

५६५ रामायणचम्पू .... .... .... नि ०-१२ ०

५६६ रघुनाथविजयचम्पू सटिप्पण .... गो ०-४ ०

५६७ श्रीनिवासचम्पू सटिप्पण .... .... गो ०-१२ ०

५६८ आनंदवृंदावनचम्पू .... .... म ३-० ०

## कोशग्रन्थाः ।

५६९ अमरकोशरामाश्रमीटीकासहित .... नि ४-० ०-

५७० अमरकोशसटीक .... .... .... टी १-४ ०-

५७१ अमरकोश भाषाटीका शब्दानुक्रमणिका क १-८ ०-

५७२ अमरकोश मूल .... .... .... क ०-७ ०-१॥

५७३ अमरकोष मूल छोटे अक्षरका गुटका क ०-५ ०-१